श्रीः

# ...न्तलक्षणतत्त्वालोकः ।



सर्वतन्त्रस्वतन्त्रमिथिलामण्डलमण्डनपण्डितकुलपति
झोपाख्यधर्मदत्त(बच्चा)सूरिविरचितः



ग्रन्थकर्त्तुस्तनूजन्मनान्यायाद्यनेकशास्त्रा
ध्यापकश्रीजगदीशशर्मणा ।



तदन्तेवासिश्रोत्रियकुलोत्पन्नन्यायोपाध्यायेन
श्रीगोप्तृनाथमिश्रेणसंस्कृतः ।

काश्यां
विद्याविलासयन्त्रालयेमुद्रयित्वाप्रकाशितः ।



...नाविह...
समुपनता अशुद्धी...
दारपरिष्कारप्रकाररस...
...द्यधिकारःस्वायत्तीकृतश्च ।

१९२५

*Printed by—*
JAI KRISHNA DASS GUPTA,
At the Vidya Vilas Press, Gopal Mandir Lane,
Benares City.

श्रीः

# सिद्धान्तलक्षणतत्त्वालोकः

आसीददसीयप्रणयनकरः कृतिकुलकैरवकलाकरः श्वसितमिवन्यायस्य सर्वस्वमिव मीमांसायाः रहस्यमिव वेदान्तस्य सौहित्यमिव साहित्यस्य जीवातुरिव कल्पनायाः आकर इव कीर्त्तिरत्ननिकरस्य धर्मदत्तोपाध्यायो ( बच्चाझा ) जन्मना प्रसाधयतिस्म मिथिलामेदिनीतलम् । यः स्थाविरे मिथिलामहीभृतो महाराजाधिराजश्री ५ रमेश्वरसिंहस्य ( जी. सी. आई. के. बी. ई. ) निदेशतएव मुजफ्फरपुरनगरवर्त्तिनि राजकीयसंस्कृतमहाविद्यालये ऽभ्युपैषीत् पदं प्रधानाध्यापकस्य । येनच वाचस्पतिमिश्रप्रमुखेनेव निर्माणकर्मीकृतानां निम्ननिर्दिष्टनाम्नां ग्रन्थानामध्यापनेन गौरवमतितमामासादयन्ति मनीषिणः, तेषामेवनिबन्धानां समुद्धारे बद्धपरिकरेण पुरोदीरितोपाध्यायान्तेवासिना सकलशास्त्रनिष्णातधिषणेन सद्वृन्दारकाभिनन्दितशीलसुन्दरेण यतिवृन्दवन्दितपदद्वन्द्वारविन्देन श्रीपूर्णानन्दस्वामिना व्याप्तिपञ्चकगूढार्थतत्त्वालोकमुद्रापणानन्तरंसमुत्साहोद्रेकादिदमीयमुद्रापणे द्रागेवप्रवृत्तिरकारि, यत्रपूर्वरूप( प्रूफ ) निर्णजनकार्यभारो विशुद्धिद्योतमानानवद्यहृद्यविद्याप्रतिहतप्रतिभाविभासितमैथिलश्रोत्रियप्रकाण्डश्रीमार्कण्डेयमिश्रे मयिच वितीर्णो नैसर्गिकेण प्रणयेन । तत्राशीतितमपृष्ठंयावदेतेन ततश्च समाप्तिं यावन्मया संशोधनेविहितेऽपि दृष्टिदोषेण सीसकाक्षरसंयोजकस्यवाप्रमादेन समुपनता अशुद्धीः स्वयमेव सूक्ष्मेक्षिकयाभिवीक्षणेनाक्षिप्य प्रत्यग्रोदारपरिष्कारप्रकाररसमाशुसमास्वादयन्तु नैयायिकाइति--

श्रीगोप्तृनाथमिश्रः

## धर्मदत्तोपाध्यायनिर्मितग्रन्थानां नामानि

| | | |
|---|---|---|
| १ | व्याप्तिपञ्चकस्यगूढार्थतत्त्वालोकः ? | मुद्रितः |
| २ | सिद्धान्तलक्षणस्य | ,, |
| ३ | व्युत्पत्तिवादस्य | ,, |
| ४ | भगवद्गीतामधुसूदिन्याः | ,, |
| ५ | अवच्छेदकत्वनिरुक्तेः | अमुद्रितः |
| ६ | व्याप्त्यनुगमस्य | ,, |
| ७ | सामान्यनिरुक्तेः | ,, |
| ८ | तात्पर्यटीकायाः | ,, |
| ९ | वात्स्यायनभाष्यस्य | ,, |
| १० | प्रस्तारविचारः | ,, |
| ११ | सव्यभिचारस्य टिप्पणी | अमुद्रिता |
| १२ | सत्प्रतिपक्षस्य | ,, |
| १३ | कुसुमाञ्जलिप्रकाशस्य | ,, |
| १४ | भस्मधारणव्यवस्था | ,, |
| १५ | सुलोचनामाधवंनामचम्पूकाव्यम् | अमुद्रितम् |

॥ श्री ॥

# सिद्धान्तलक्षणतत्त्वालोकः ।

॥ श्रीगणेशाय नमः ॥

व्याजस्वीकृतसेवया विधुरभूदग्रेसरः श्रीमता—
म्मानव्याहतिकैतवावनमनादीशस्त्रिलोकीपतिः ।
साभिज्ञाब्जकुलप्रसूतिविभवादम्भोजमब्जालयो
यस्य श्रीगिरिजापदाम्बुजयगन्तस्यादभीष्टप्रदम् ॥ १ ॥
जगदीशकृतव्याप्तिग्रन्थव्याख्यावलम्बिनी ।
विवृतिर्धर्म्मदत्तेन मैथिलेन वितन्यते ॥ २ ॥

ओंनमोवाग्वादिन्यै ॥ सिद्धान्तजाविवेचनाप्रारभ्यते ॥ मूले नान्वयादिशङ्कासिद्धान्तमाह । अत्रोच्यतेइत्यादि जिज्ञासाविषयीभूतापूर्वपक्षतासमाप्त्यनन्तरम्वा हेतुसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकावच्छिन्नभिन्नसाध्यसामानाधिकरण्याभिन्नाव्याप्तिः प्रतिपत्त्यनुकूलव्यापारविषयइत्यर्थः । नन्वन्वयप्रतियोग्यनुयोगिपदार्थाव्यवधानेनोपस्थितिरूपाया आसत्तेस्त्वव्यवहितोत्तरत्वपूर्वत्वान्यतरसम्बन्धेनैकसाकाङ्क्षपदविशिष्टापरसाकाङ्क्षपदज्ञानरूपासत्तिसंवलिताकाङ्क्षाज्ञानस्य वा गिरिर्भुक्तमग्निमान्देवदत्तेन घटोन कम्बुग्रीवादिमान् शुक्लः पटइत्यादिवाक्यतस्सत्यपियोग्यतातात्पर्य्यादिज्ञाने देवदत्तकर्तृकभोजनमाग्निमदभिन्नमचलं शुक्लपटभिन्नकम्बुग्रीवादिमद्धटश्चावगच्छन्तिमहीतशब्दशक्तिका अपीतिशाब्दबोधकारणताया व्यवस्थापितत्वात् कथं प्रतियोगितावच्छेदकावच्छिन्नान्यत्वप्रतीतिः नच माप्रतीयताङ्कोदोषः तादृशप्रतियोगितावच्छेकावच्छिन्नवृत्तिभेदप्रतियोगिसाध्यसामानाधिकरण्यस्य व्याप्तित्वे क्षत्यभावादितिवाच्यम् वह्नित्वावच्छिन्नस्येत्याद्यव्याप्तिपरग्रन्थे साध्य एव भेदविरोधिप्रतियोगितावच्छेदकीभूतादृशप्रतियोगितावच्छेकावच्छिन्नत्वप्रदर्शनेन तादृशभेदस्यैवलक्षणघटकताप्रतीतेः अथ नातिभारः कार्य्य-

कारणभावस्य ग्रन्थविरोधेन येन प्रकृतविषयेसङ्कोचमासादयेदिति चेन्न प्रतियोगितावच्छेदकावच्छिन्नघटादिवृत्तिभेदप्रतियोगित्वात् साध्यस्यातिव्याप्तेः नचावच्छेदकावच्छेदेनान्वस्यौत्सर्गिकत्वेन प्रतियोगितावच्छेकावच्छिन्नत्वव्यापकभेदप्रतीतेर्नातिव्याप्तिरितिवाच्यमुभयभेदमादायातिव्याप्त्या साध्यतावच्छेदक एव भेदप्रतियोगितावच्छेदकत्वस्य भेदप्रतियोगितायाम्वा साध्यतावच्छेदकेतरानवच्छिन्नत्वस्य विवक्षणीयतया प्रमेसाध्यकेऽव्याप्तेःप्रमेयत्वस्य भेदप्रतियोगितानवच्छेदकत्वात् उभयभेदस्य केवलान्वयित्वेनोभयसाध्यकव्यभिचारिण्यतिप्रसङ्गाच्च प्रतियोगितावच्छेदकावच्छिन्नत्वव्यापकोभयावृत्तिधर्म्ममात्रावच्छिन्नप्रतियोगिताकभेदप्रतियोगितावच्छेदकसाध्यसामानाधिकरण्यस्य साध्यतावच्छेदके विवक्षणेऽपि तादात्म्येन प्रमेयसाध्यकाव्याप्तेः अत एव प्रतियोग्यवृत्तितादृशभेदप्रतियोगिसाध्यसामानाधिकरण्यविवक्षापि निरस्ता व्युत्पत्तिवैचित्र्येण प्रतियोगितावच्छेदकत्वावच्छेदेन साध्यतावच्छेकभेदविवक्षणे प्रमेयसाध्यतावच्छेदकस्थले दोषस्य दुर्वारत्वात् प्रतियोगितानिरूपितावच्छेदकतात्वावच्छेदेन साध्यतावच्छेदकताविशिष्टान्यत्वस्यस्वसामाधिकरण्यस्वावच्छेकसम्बन्धावच्छिन्नत्वस्ववृत्तित्वस्वानवच्छेदकानवच्छिन्नत्वैतच्चतुष्टयसम्बन्धेन विवक्षणे चातिगौरवात् ॥ उच्यते तथास्थितासत्तेस्तात्पर्य्यविषयानिर्व्वाहकत्व आसत्त्यन्तरकल्पनाया दृष्टत्वात् काव्यप्रबन्धेषु नायंसुधांशुरित्यादौ तत्रह्येतद्भिन्नसुधांशौ व्योमगङ्गासरोरुहत्वप्रतीतेर्विवक्षितवच्छित्तिविशेषाप्रत्यायकत्वात् प्रकृतेऽपि विवक्षितलघुलक्षणप्रत्ययाय प्रतियोगितावच्छेकावच्छिन्नपदनञ्पदार्थयोरव्यवधानेनोपस्थितिकल्पना पदयोर्व्वाऽव्यवधानेनान्वयानुसन्धानकल्पनायुक्तैवेति एवंयत्पदघटितवाक्येनञ्समभिहारेयत्पदार्थस्यविशेष्यत्वयोग्यत्वेतस्यैतत्त्वमिति नञ्समभिहारेऽपिस एव विशेष्योऽन्यथोदाहरणवाक्यान्नञ्पदघटिताद्वह्निमद्भेदधूमवद्भेदयोर्व्याप्यव्यापकभावोनप्रतीयते नियमतः प्रतियोग्यभावान्वयस्यतुल्ययोगक्षेमत्वादिति ॥ अथात्रापि तादृशप्रतियोगितावच्छेदकावच्छिन्नघटादिभेदस्यसाध्येसत्त्वादतिव्याप्तिः प्रतियोगितावच्छेदकावच्छिन्नसामान्यभेदनिवेशे साध्यमात्रस्यैव यावदभावीयप्रतियोगितावच्छेदकावच्छिन्नत्वेनासम्भवः नच यथाश्रुतइष्यत इति वाच्यन्ना-



व्यक्तिसाध्यकस्थलाव्याप्तिमात्रप्रदर्शकवह्नित्वाद्यवच्छिन्नस्येत्यादिग्रन्थविरोधात यत्तु हेतुसमानाधिकरणाभाववृत्युभयावृत्तिधर्म्मनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरुपिताभावनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरुपितप्रतियोगितानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरुपितावच्छेदकत्वानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरुपितधर्म्मनिष्ठावच्छेदकत्वभिन्नावच्छेदकत्वानिरुपितावच्छिन्नत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरुपितप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्य्याप्तिककूटत्वावच्छिन्नवत्वविवक्षायां समवायेन प्रमेयसाध्यके व्यभिचारिणि प्रमेयाभावप्रतियोगितावच्छेदकावच्छिन्नभेदस्याप्रसिद्धत्वेऽपि घटपटादितत्तत्प्रमेयाभावप्रतियोगितावच्छेदकावच्छिन्नभेदकूटस्य साध्ये विरहान्नातिव्याप्तिसम्भावनाप्यसम्भवस्तु दूरनिरस्त इति तन्न यथा श्रुते प्रतियोगिवैयधिकरण्यस्यापि यथाश्रुतस्यैव प्रवेशेनासमवेतप्रमेये तादृशभेदकूटसत्त्वात् प्रमेयत्वावच्छिन्नाप्रतियोगिकत्वे सति घटत्वावच्छिन्नाप्रतियोगिकस्ववृत्तिवाच्यत्वसमवायान्यतसम्बन्धेन प्रमेयसाध्यकव्यभिचारिणि प्रसिद्धस्वप्रतियोगितावच्छेदकावच्छिन्नभेदकघटाभावस्यैवोभयथापि प्रतियोगिव्यधिकरणाभावतयाऽतिव्याप्तेश्च तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नत्वावच्छिन्नानुयोगिताकपर्य्याप्तिककूटत्वावच्छिन्नवत्त्वं स्ववृत्युभयावृत्तिधर्म्ममात्रावच्छिन्नभेदवत्वसम्बन्धावच्छिन्नतादृशाभावप्रतियोगितावच्छेदकावच्छिन्नत्वसमानाधिकरणोभयावृत्तिधर्म्मावच्छिन्नप्रतियोगिताकपर्य्याप्तिककूटत्वावाच्छिन्नवत्त्वञ्चातिव्याप्तिवारकमपि यावदभावमादायासंभववारणाय नालमिति ॥ अतएव तादृशप्रतियोगितावच्छेदकत्वव्यापककूटत्वावच्छिन्नवत्त्वंविवक्षणीयं व्यापकता च स्वाश्रयभेदप्रतियोगितावच्छेदकसामानाधिकरण्यसम्बन्धेनेत्यपि निरस्तं समवायेन प्रमेयसाध्यकातिव्याप्तिवारणेप्युक्तसम्बन्धविशेषेणप्रमेयसाध्यकातिव्याप्तितादवस्थ्यात् तत्तद्घटभेदकूटत्वस्यापि तादृशत्वात् तादृशप्रतियोगितावच्छेदकावच्छिन्नत्वसमानाधिकरणोभयावृत्तिधर्म्मत्वव्यापकतायाः स्वाश्रयभेदप्रतियोगितावच्छेदकत्वसम्बन्धेन कूटत्वे निवेशेचासम्भवस्य जागरूकत्वादिति चेन्न साध्यतावच्छेदकातिरिक्तव्यासज्यवृत्तिधर्म्मानवच्छिन्नत्वस्य प्रतियोगिता विशेषणत्वेऽसम्भवाप्रशक्त्या प्रागुक्तसामान्यभेदनिवेशस्यादुष्टत्वात् स्व-

वृत्तिभेदीयतद्घटत्वावच्छिन्नप्रतियोगितासम्बन्धेन पटसाध्यक-
कतद्घटत्वे सद्धेतौ यावदभावं तद्व्यक्त्यभावञ्चादाय लक्षणा-
सम्भवासम्भवाच्चेतिदिक् । वह्नित्वावच्छिन्नस्य सर्वस्यैवेत्यादि
अत्र वह्नित्वावच्छिन्नस्येत्युक्तिस्सार्वभौमीयव्याख्यान्दूषयतुन्तथाहि
तत्तद्व्यक्त्यभावमादायाव्याप्तिवारणाय यत्पदं लुप्तसप्तमीकम-
वच्छिन्नपदञ्चावच्छेदकतानिरूपितार्थकं स्वीकृत्य हेतुसमाना-
धिकरणप्रतियोगिव्याधिकरणाभावप्रातियोगितावच्छेदकावच्छिन्नप्रति-
योगित्वात्यन्ताभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमेव-
मूलतात्पर्यार्थोवाच्यः प्रतियोगितायाश्चाव्याप्यवृत्तित्वाभ्युपगमा-
न्नात्रदोषावसरः नच प्रतियोगितासामान्यशून्यत्वस्यैवास्तुल-
क्षणघटकता किमिति शिरोवेष्टनेन नासिकास्पर्शानुधावनमिति
वाच्यम् तत्सम्बन्धावच्छिन्नप्रतियोगितायास्तत्सम्बन्धप्रतियोगि-
न्येवस्वीकारपक्षे द्रव्यवान्प्रमेयत्वादित्यत्रातिव्याप्तेः गगनादीनां सा-
ध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताशून्यत्वात्तद्विवक्षणे स-
मवायसम्बन्धावच्छिन्नद्रव्याभावप्रतियोगितावच्छेदकावच्छिन्नद्रव्य-
भेदप्रतियोगित्वस्य द्रव्यमात्र एव सत्त्वान्नातिव्याप्तिः । साध्यता-
वच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यघटितकल्पे दोषाभावे
इष्यताम्वा तदेव तत्रैव मूलतात्पर्य्यस्य वक्तव्यत्वादिति सार्वभौमै-
व्याख्यातम् तत्र वह्नित्वावच्छिन्ने प्रतियोगितावच्छेदकावच्छिन्नत्व-
प्रदर्शनेन तन्नियतप्रतियोगिताया अपि सत्त्वे सूचिते तस्या अव्याप्य-
वृत्तित्वलाभादव्याप्तेर्न्न वारणमिति दूषणं सूचितम्भवति अत्र सत्ता-
वान् जातेरित्यादौ विशिष्टसत्तासाध्याभावमादायाव्याप्त्यादीनि दूष-
णान्तराण्यपिविशेषव्याप्तिव्याख्यानावसरे दीधितिकृता वक्ष्यमाणा-
न्यवधेयानि । एवं शब्दाश्रयवान् तज्ज्ञानत्वादित्यत्र तद्व्यक्त्यभाव-
मादायाव्याप्ति रपि दोषोत्रबोध्यः । केचित्ववच्छेदकतायां प्रतियो-
गितानिरूपितायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य व-
क्ष्यमाणतया वह्नित्वेनसाध्यतास्थले तद्व्यक्तित्वनिष्ठावच्छेदकतायान्त
द्विरहेव्याप्त्यप्रशक्त्यावच्छिन्नत्वेनवह्नेस्साध्यतालाभाय तथाविधोप-
न्यासः नचाव्याप्तितादवस्थ्योक्तिरसंगतेऽतिवाच्यन्तादवस्थ्यस्यावि-
शेषिताव्याप्तिपदार्थान्वयस्यैव विवक्षितत्वान्नचैवमग्रे तदनभिधाना-
न्न्यूनतेतिवाच्यं तदभिधानस्याकिञ्चित्करत्वात् कथमन्यथावच्छेद-



कत्वविचारग्रन्थेनचैवमनतिरिक्तवृत्तित्वांशवैयर्थ्यमित्यादिपङ्क्तौ प-
रिभाषिकावच्छेकत्वापत्तितादवस्थ्यादितिलेखनोपेक्षा घटते क्वचि-
त्तद्दुक्तिश्च परस्यातिप्रतिभाशून्यताज्ञापनेन पराजयोत्कर्षसूचनाये-
ति प्रागुक्तसाध्यतासमनियतसाध्यताकस्थलीयदोषसद्भाव एव ता-
दवस्थ्यशब्दस्यपरिभाषितत्वान्नासंगतिः नहि तत्र साध्यत्वयोरव-
च्छेकैक्यापेक्षेत्यपि कश्चिदिति वदन्ति तन्न साध्यतावच्छेकताघट-
कसम्बन्धावच्छिन्नत्वस्य पारिभाषिकस्य विवक्षणीयतया वह्निसाध्य-
कस्थलेऽपि सम्भवात् यतु प्रतियोगितावच्छेदकताघटकसम्भन्धेन
प्रतियोगितावच्छेदकावच्छिन्नत्वाविवक्षाया आवश्यकतया विषयित-
या रूपत्वविशिष्टाभावमादायाव्याप्तेरप्रशक्तेरवच्छेदकतायां साध्यता-
वच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशनमनावश्यकमेवेति तत्र
स्वरूपेणगुणभेदविशिष्टसत्तासाध्यके सामानाधिकरण्यसम्बन्धेन गु-
णभेदविशिष्टाभावमादायाव्याप्तेः विषयितासमवायान्यतरसम्बन्धेन
रूपत्वविशिष्टसाध्यकात्मघटान्यतरत्वेहतौ प्रत्येकसम्बन्धेन रूपत्व-
विशिष्टाभावमादायाव्याप्तेश्च वह्निमान्धूमादित्यत्र तद्व्यक्त्यभावस्य
साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिता-
काभावप्रवेशादपिवारणसम्भवेन वह्नित्वावच्छिन्नसाध्यकस्थलाव्या-
प्तिसूचनाय वह्नित्वावच्छिन्नेत्युक्तमित्यस्यापि सुवचत्वाच्च वह्निपदस्य
समवायेन वह्नित्वविशिष्टस्यैव बोधकतया नाना सम्बन्धेन वह्नित्ववि-
शिष्टसाध्यकस्थलाव्याप्तेस्सम्भवन्त्यास्त्वदुक्तावलाभाद्वह्नित्वावच्छि-
न्नस्येत्युक्तन्तल्लाभायेतितुज्यायः । अन्यथा व्याचष्ट इति शब्दशक्यार्थ-
स्यागेन तात्पर्यविषयार्थप्रतिपत्यनुकूलप्रतियोगितानवच्छेदकोयोध-
र्मः इत्यादिग्रन्थाभिव्यापारानुकूलकृतिमानित्यर्थः । अथात्र त-
द्व्यक्तित्वावच्छिन्नाभावमादायाव्याप्तिवारणायावच्छेदकपदस्यावच्छे-
दकत्वेलक्षणायत्पदार्थैकदेशान्वयञ्चस्वीकृत्योक्तव्याख्यानक्लेशोऽनुचि-
तोदीधितिकर्ता तादृशप्रतियोगितावच्छेदकावच्छिन्नपदशक्या-
र्थप्रतियोगितावच्छेदकनिष्ठावच्छेदकतानिरूपकभेदस्य यद्धर्म्मा-
वच्छिन्नप्रतियोगित्वयत्पदार्थेऽन्वयस्वीकारादपिदोषवारणसम्भवान्नच
प्रतियोगिताभेदएव लाघवान्निवेश्यः प्रतियोगिवैयधिकरण्यघटित-
व्याप्तौसाध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वस्यहेत्वधिक-
रणेतत्सम्बन्धित्वस्यैवचाभावे निवेशनीयतया प्रतियोगितायां सा-

ध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे प्रयोजनाभावाद्व्यभिचारि-
मात्रेऽतिव्याप्तिविरहेऽपि समवायसवन्धावच्छिन्नात्मत्वाभावस्या-
त्मावृत्तेरपितत्सम्बन्धितयातदात्मानुयोगिकसमवायेनात्मत्वसाध्यक-
ज्ञानहेतावप्यतिव्याप्तिविरहेपि च प्रतियोगिवैयधिकरण्याघटि-
ते वाच्यम् ज्ञेयत्वादित्यत्राव्याप्तिवारणाय साध्यतावच्छेदक-
सम्बन्धावच्छिन्नत्वस्य प्रतियोगिताविशेषणताया आवश्यकतया
व्यभिचरिमात्रे सम्बन्धान्तरावच्छिन्नसाध्यप्रतियोगितामादाया-
तिव्याप्तिः । ननु तादृशाभावप्रतियोगितावच्छेदकानवच्छिन्नप्रति-
योगितावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यपर्य्यव-
सिते लक्षणे व्याप्यवृत्तिसाध्यकस्थलीये तादृशप्रतियोगिता-
भिन्नप्रतियोगितावच्छेदकत्वघटितेऽव्याप्यवृत्तिसाध्यकस्थलीये च
जात्यवच्छिन्नाभावप्रतियोगितामादाय धूमवान्वह्नेरित्यादावति
व्याप्तिः प्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकत्वस्य दण्डादि
साध्यतावच्छेदकहेतावव्याप्त्या विवक्षितुमशक्यत्वादिति चेन्न ता-
दृशप्रतियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेद-
कत्वस्य साध्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदके
विवक्षणे दोषाभावात् जातित्वस्वरूपावच्छेदकत्वस्याव्या-
सज्यवृत्तित्वेन धूमत्वगतैकत्वाद्यवच्छिन्नानुयोगिताकपर्याप्तिप्रति-
योगित्वेप्यवच्छेदकत्वे निरूपितत्वस्य साक्षात्परम्परा साधारण-
स्य प्रवेशेन जातित्वस्यापि प्रतियोगितावच्छेदकत्वादथ तादृश-
प्रतियोगितावच्छेदकताविशिष्टावच्छेदकतात्वावच्छिप्रतियोगितावि-
वक्षणीया वैशिष्ट्यञ्च स्वतादात्म्य स्वनिरूपितत्वान्यतरसम्ब-
न्धेन यद्वा तादृशप्रतियोगिताविशिष्टसाध्यतावच्छेदकत्वम्बिवक्षणी-
यं वैशिष्ट्यञ्च स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वा-
निरूपितत्वैतत्सम्बन्धावच्छिन्नस्ववृत्तित्वोभयसम्बन्धेन वैशिष्ट्य-
ञ्च स्वसामानाधिकरण्य स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धावच्छि-
न्नस्ववृत्तित्वस्वानवच्छेदकानवच्छिन्नत्वस्वावच्छेदकसम्बन्धाववच्छि-
न्नत्वैतच्चतुष्टयसम्बन्धेन तार्णवह्निसाध्यकस्थले वह्निज्ञानत्वेन व्य-
भिचासरिणि वह्न्यभावप्रतियोगितामादायातिव्याप्तिवारणाय प्रथम-
सम्बन्धनिवेशः तद्ग्राहकस्वसामानाधिकरण्यमपितदर्थकमेव जा-
तिमद्वह्निसाध्यके व्यभिन्नारिणि जातिमदभावप्रतियोगितामादायाति-



व्याप्तिवारणाय स्ववृत्तित्वनिवशः तत्रैव वह्न्यभावमादायातिव्याप्तिवा-
रणायस्वानवच्छेदकानवच्छिन्नत्वनिवेशः कालिकेनवह्नित्वविशिष्टत्वे-
सतिसमवापेन वह्नित्वविशिष्टसाध्यके व्यभिचारिणि समवायेन वह्नि-
विशिष्टाभावप्रतियोगितामादयातिव्याप्तिवारणाय स्वावच्छेहकस-
म्बन्धावच्छिन्नत्वनिवेशः वह्निसाध्यकस्थले व्यभिचारिणि तार्णव-
ह्न्यभावप्रतियोगितामादायातिव्यातिवारणाय स्ववृत्तित्वप्रवेशः त-
द्घटकस्वसामानाधिकरण्यमपि तदर्थकमेव जातिमत्साध्यकव्यभि-
चारिणि जातिमद्वह्न्यभावप्रतियोगितामादायातिव्याप्तिवारणाय स्व-
वृत्तित्वस्यप्रवेशः वह्निसाध्यकव्यभिचारिणि जाजितिमद्वह्न्यभावप्र-
योगितामादायातिव्याप्तिवारणाय स्वानवच्छेदकानवच्छिन्नत्वस्य त-
द्घटकस्यप्रवेशः समवायेन वह्नित्वविशिष्टसाध्यके व्यभिचारिणि का-
लिकेन वह्नित्वविशिष्टत्वे सति समवायेन वह्नित्वविशिष्टाभावप्रतियो-
गितामादायातिव्याप्तिवारणाय स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्य
निवेशः साध्यता च प्रायोविषयितया बोध्येति चेन्नैवं वृत्त्यनिया-
मकसम्बन्धस्यप्रतियोगितावच्छेदकत्वानवच्छेदकत्वाभ्युपगमेन क-
ल्पद्वयस्य वक्ष्यमाणतया तन्मतद्वयानुसारेणानवच्छेदकत्वगर्भव्या-
ख्यादरणात् वृत्त्यनियामकस्य प्रतियोगितावच्छेदकत्वपक्षे उक्तल-
क्षणस्य निदोषत्वंऽपि तस्या तथात्वेदोषसम्भवात् तत्र यद्यपि
विषयितयागुरुधर्मसाध्यकेऽव्याप्तिर्नोद्भावयितुं शक्या सिद्धा-
न्तेऽप्युक्तपक्षे पारिभाषिकावच्छेदकत्वविवक्षायामपि विषयि-
तया गुरुधर्मेण साध्यातायाम्व्यभिचारिण्यतिव्याप्तेरशक्यपरि-
हारत्वेन तत्सम्बन्धादिसाध्यकस्थलस्य तत्पक्षएतल्लक्षणालक्ष्यता-
या एव स्वीकरणीयत्वात्तथापि संयोगादिना गुरुधर्मेण साध्यतायां
सद्धेतौ गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेऽव्याप्तेरशक्यपरिहार-
त्वात् तादृशप्रतियोगितावच्छेदके यद्धर्माविशिष्टसम्बन्धिनिष्ठाभावप्र-
तियोगितानवच्छेदकत्वविवक्षा च तादृशप्रतियोगितावच्छेदकद्र-
व्यत्वादेर्धूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वेनधू-
मवान्वह्नेरित्यत्रातिव्याप्तेरशक्यत्वात् तेन साध्यतावच्छेदके तादृशप्रति-
योगितावच्छेदकत्वमनतिरिक्तवृत्तित्वमेव वाच्यमिति निरस्तं सासामा-
नाधिकरण्यसम्बन्धेन घटभेदाविशिष्टसाध्यकसद्धेतौ साध्याभावस्य
गुरुधर्मावच्छिन्नाभावतयाऽप्रसिद्ध्या घटभेदाभावयितादृशप्रतियोगि-

तातिरिक्तवृत्तितया साध्यतावच्छेदकस्येत्यव्याप्तेः तादृशसत्ताभावप्र-
तियोगितावच्छेदकत्वस्य तादृशस्य विशिष्टसत्तात्वे सत्त्वेन विशिष्ट-
सत्तावाञ्जातेरित्यत्रातिव्याप्तेश्च अतएव तादृशप्रतियोगितावच्छेदके
साध्यतावच्छेदकव्याप्यत्वविवक्षापि निरस्ता नच साध्यतावच्छे-
दकावच्छिन्नव्याप्यतावच्छेदकत्वस्मिवक्षितुं शक्यं तद्धि साध्यता-
वच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाभाववन्निष्ठाधि-
करणतानिरूपकतावच्छेदकत्वम्वा साध्यतावच्छेदके तादृशप्रतियो-
गितावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वपर्य्यवसायि वा तादृश-
यत्किञ्चिद्धर्मावच्छिन्नव्यापकतावच्छेदकत्वपर्य्यवसायि वा तत्र
नाद्यः केवलान्वयिसाध्यकाव्याप्तेः न द्वितीयः व्यतिरेकिण्यव्या-
प्तेः साध्याधिकदेशवृत्तितावच्छेकतादृशधर्मावाच्छिन्नाधिकरणविशेषे
साध्यस्यावृत्तेः नान्त्यः गुरुधर्मेण साध्यतायां व्यभिचारिण्यतिप्रस-
ङ्गात् तस्य साध्यतावच्छेदकसम्बन्धाच्छिन्नप्रतियोगितामात्रानव-
च्छेदकत्वात् नच विषयितासम्बन्धेन व्याप्यव्यापकभावः प्रकृते
विवक्षणीयः गुरुधर्मसाध्यकसद्धेताघव्याप्तेः अथास्तु साध्यतावच्छे-
दकसम्बन्धेनैव तत् प्रतियोगिवैयधिकरण्यन्तुसाध्यतावच्छेदकाव-
च्छिन्नाधिकरणत्वप्रतियोगित्वावच्छिन्नाधिकरणत्वोभयाभावरूपमेव-
वाच्यन्तथाच व्यभिचारिमात्रेऽभावमात्रस्यैव प्रतियोगिवैयधिकरण्य-
वत्वेन तादृशप्रतियोगिताभिन्नप्रतियोगित्वाप्रसिद्ध्यैव नातिव्या-
प्तिरिति चेन्न धूमाभावप्रतियोगित्वविशिष्टस्यसंयोगेनसाध्यताया-
म्व्यभिचारिणिवह्नौ धूमाभावप्रतियोगित्वावच्छिन्नाधिकरणत्वसा-
ध्यतावच्छेदकीभूततादृशप्रतियोगित्वावच्छिन्नाधिकरणत्वद्वयाप्रसि-
द्ध्या धूमाभावस्य प्रतिगिव्यधिकरणत्वविरहेण तत्प्रतियोगिताया-
स्तादृशत्वा दतिव्याप्तेः नच द्वयत्वमप्रवेश्यन्तथा च साध्यतावच्छेद-
कावच्छिन्नाधिकरणत्वत्वनिष्ठावच्छेदकताभिन्नप्रतियोगित्वावच्छि-
न्नाधिकरणत्वत्वनिष्ठावच्छेदकताभिन्नोभयत्वनिष्ठावच्छेदकताभिन्नाव-
च्छेदकत्वानिरूपितप्रतियोगिताकाभावत्वनैवाभावो लक्षणघटकः एव-
ञ्च धूमाभावप्रतियोगित्वावच्छिन्नाधिकरणत्वाभावस्यापि तादृशत्वे-
न तस्य हेत्वधिकरणवृत्तित्वाद्धूमाभावोऽपि प्रतियोगित्र्यधिकरण
एवेति वाच्यम् । घटत्वावच्छिन्नाप्रतियोगिकस्ववृत्तिवाच्यत्ववत्तासं-
योगान्यतरसम्बन्धेन पटसाध्यकसद्धेतौ प्रतियोगिव्यधिकरणाभा-



वाप्रसिद्धेः यदि च प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वत्वनि-
ष्ठावच्छेदकताभेद एव निवेश्यः तथा च नाभावाप्रसिद्धिरित्युच्यते
तदाधिकरणतायां प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वनिवशे
व्यधिकरणसम्बन्धावच्छिन्नसाध्याभावमादायातिव्याप्तिरधिकरणतायां
साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वप्रवेशे वह्नीयसंयोगेनसाध्यतायां
प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वाप्रसिद्ध्याऽव्याप्त्यापत्तिः सि-
द्धान्तकल्पे च सम्बन्धधर्मिकोभयाभावस्य वक्ष्यमाणतया न तत्र दो-
षावसरः अत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणत्वीयस्व-
रूपसम्बन्धसामान्ये साध्यतावच्छेदकावच्छिन्नाधिकरणत्वप्रतियोगि-
तावच्छेदकावच्छिन्नाधिकरणत्वद्वयप्रतियोगिकत्वहेत्वाधिकरणभूतय-
त्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावश्च धूमवान्वह्नेरित्यत्रतादृशाधिक-
रणताद्वयाप्रसिद्ध्या धूमाभावस्यप्रतियोगिवैयधिकरण्यासम्भवादति-
व्याप्त्या हेयः नचाधिकरणतायांसम्बन्धावच्छिन्नत्वस्यानिविष्ट-
त्वेन कथन्तद्द्वयत्वाप्रसिद्धिरिति वाच्यन्तथाप्यभावाप्रसिद्धेः धूम-
त्वावच्छिन्नाधिकरणताद्वयप्रतियोगिकत्वतादृशानुयोगिकत्वोभयन्ना-
स्तीत्यस्यैवतादृशाभावप्रतीतित्वेन तत्र द्वित्वस्य प्रतियोगितावच्छे-
दककोटावेकधर्म्मावच्छेदेन भासमानतया तादृशधर्म्मव्याप्यत्ववि-
शिष्टपर्य्याप्तेरेव तत्संसर्गत्वेन तेन द्वित्वमात्रस्यावच्छेदकत्वे क्षत्य-
भावेनाधिकरणतात्वस्यानवच्छेदकत्वात् नचैवमपिकिञ्चित्सम्बन्धा-
वच्छिन्नत्वमधिकरणताद्वये प्रवेश्यन्तथाच विशेषाभावमादायैवना-
तिव्याप्तिरिति वाच्यमतिव्याप्तिविरहेपि वह्नित्वावच्छिन्नप्रतियोगि-
कसंयोगेन वह्निसाध्यकस्थले सद्धेतौ वन्ह्यभावस्यापि प्रतियोगिव्य-
धिकरणत्वादव्याप्तिस्स्यादिति अत एव त्रितयाभावोपि न निवेश्यः
नापि च साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्वप्रतियोगितावच्छे-
दकावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगि
कत्वैतत्त्रितयाभावस्साध्यतावच्छेदकसम्बन्धसामान्यनिष्ठः नच त्रि-
त्वमनिवेश्य तन्निवेशश्शक्यक्यः कर्तुं तथाहि त्रित्वनिष्ठावच्छेद-
कताभिन्नतत्तदवच्छेदकत्वानिरूपितप्रतियोगिताकाभावस्यैव चतु-
ष्टयाभावादिवारणाय निविवेशनीयतया धूमवान्वह्नेरित्यत्रोभयाभाव-
स्यातादृशत्वात् प्रत्येकाभावस्य साध्यतावच्छेदकसम्बन्धसामान्ये
साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणत्वीयस्वरूपसम्बन्धसामा-

न्ये वा ऽसत्वादत्तिव्याप्तेः अथ साध्यतावच्छेदकावच्छिन्नाधिकर-
णतात्वनिष्ठावच्छेदकताभिन्नप्रतियोगितावच्छेदकावच्छिकावच्छिन्ना-
धिकरणतात्वनिष्ठावच्छेदकताभिन्नद्वित्वनिष्ठावच्छेदकताभिन्नावच्छे-
दकत्वानिरूपितावच्छेदकताभिन्नप्रातियोगितात्वनिष्ठावच्छेदकताभि-
न्नावच्छेदकत्वानिरूपितप्रतियोगितानिष्ठावच्छेदकताभिन्ननिरूपकत्व-
त्वनिष्ठावच्छेदकताभिन्नहेत्वधिकरणीभूतयत्किञ्चिद्वृत्त्यनुयोगिकत्वत्व-
निष्ठावच्छेदकताभिन्नोभयत्वानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरू-
पितप्रतियोगिताकाभावत्वेन निवेशः एवंसाध्यतावच्छेदकाव-
च्छिन्नसाध्यातावच्छेदकसम्बन्धावच्छिनाधिकरपात्वीयस्वरूपसम्ब-
न्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वाभावस्यनिवेशे-
वानदोष इति चेत् सत्यं प्रमेयत्वावच्छिन्नप्रतियोगिकस्वरूपे-
ण प्रमेयसाध्यकसद्धेतावव्याप्तिर्विना तत्र प्रमेयत्वावच्छिन्नाभावान्या-
भावस्य सर्वस्यैव प्रतियोगिव्यधिककरणत्वात् समवायसम्बन्धावच्छि-
न्नप्रतियोगिताकस्य प्रमेयाभावस्य प्रतियोगितावच्छेदकतायास्सम-
वेतत्वादौ प्रमेयत्वावच्छिन्नप्रतियोगिकसमवायसम्बन्धावच्छिन्नप्रति-
योगिताकस्यतस्यप्रतियोगितावच्छेदकतायाधर्मविधयाचसमवेतत्वे
संसर्गविधया च समवाये संयोगसम्बन्धावच्छिन्नप्रतियोगिता-
याश्च प्रमेयाभावीयाया द्रव्यत्वे कालिकसम्बन्धावच्छिन्नप्रतियोगिता-
वच्छेदकनाया अपि समवेतत्वादिष्वेव कल्पनाद्विषयत्वादीनांप्रतियो-
गितानवच्छेदकत्वात्तादात्म्यस्वरूपाद्यवच्छिन्नायां प्रमेयत्वावच्छेद्य-
त्वासम्भवात्तादृशप्रतियोगिताभिन्नप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तेरेवेति
एतेन प्रतियोगिवैयधिकरण्यमुक्तदिशा निरुच्य तादृशप्रतियोगिता-
भिन्नप्रतियोगितानवच्छेदकत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रति-
योगितावच्छेदकत्वोभयाभाववत्त्वमेव साध्यतावच्छेदके गुरुधर्म्म-
साध्यकसद्धेतावव्याप्तिवारणायोपादेयं व्यभिचारिमात्रे च तादृशप्र-
तियोगिताभिन्नप्रतियोगित्वाप्रसिद्ध्यैव नातिव्याप्तिरित्यपि प्रत्युक्तम्
नच प्रतियोगितावच्छेदकतायां द्वितीयायां साध्यतावच्छेदकताघटक-
सम्बन्धाद्यवच्छिन्नत्वस्यानिवेशनीयतया विषयित्वानुयोगित्वादिना
प्रमेयत्वविशिष्टाभावप्रतियोगिताया एव तादृशप्रतियोताभिन्नायाः
सम्भवः प्रतियोगिवैयधिकरण्यघटकप्रतियोगितावच्छेदकनिष्ठावच्छे-
दकतायां सम्बन्धावच्छिन्नत्वाप्रवेशेन तादृशाभावस्य प्रतियोगिवैयधि-



करण्यासम्भवादितिवाच्यम् तत्रापि परम्पराविशेषसम्बन्धेन लाघ-
वेन प्रमात्वादेरेवावच्छेदकत्वादिति एवं संसर्गीयप्रतियोगितायान्द्वि-
त्वावच्छिन्नत्वास्वीकारे विशेषरूपेणसंसर्गत्वास्वीकारे च सिद्धान्ते
प्रतियोगिताधर्म्मिकोभयाभावघटितकल्पस्य निर्दुष्टस्य संभवः अत्र
च कल्पे न तत्संभवः तथाहि स्वप्रतियोगितावच्छेदकसम्बन्धेन प्रति-
योगिव्यधिकरणाभावभिन्नाभावीयप्रतियोगितासामान्ये साध्यताव-
च्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्व साध्यतावच्छेदकातिरि-
क्तधर्म्मावच्छिन्नत्वोभयाभावः साध्यतावच्छेदसम्बन्धानवच्छिन्नत्व-
साध्यतावच्छेदकावच्छिन्नत्वाभयाभावः साध्यतावच्छेदकसम्बन्धा-
वच्छिन्नत्वसाध्यतावच्छेदकानवच्छिन्नत्वोभयाभावोवा निवेश्यः तत्र
नाद्यः कालिकसम्बन्धावच्छिन्नघटाभावप्रतियोगितायामुमयस्यैवस-
त्त्वेन वह्निमान्धूमादित्यादावव्याप्त्यापत्तेः न द्वितीयः कालिकसम्बन्धा
वच्छिन्नवह्न्यभावप्रतियोगितायामुभयस्यैव सत्त्वात् नान्त्यः संयोग
सम्बन्धावच्छिन्नद्रव्याभावीयप्रतियोगितायामुभयसत्त्वात् नापि य-
त्किञ्चित्प्रतियोगितायां प्राथमिकोभयाभावः संयोगसम्न्धावच्छिन्न-
द्रव्याभावीयप्रतियोगितायामुभयाभावसत्त्वेन धूमवाह्नेरित्यादावति-
व्याप्त्यापत्ते रिति अत एवास्तु गुरुधर्म्मावच्छिन्नसाध्यकाव्याप्तिवार-
णाय प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगित्वावृत्ति
साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्यात्रव्याप्तित्वं वृत्तिता
च स्वविशिष्ठसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छिन्नप्रति-
योगितातादात्म्येन ग्राह्या व्यभिचारिणि तु साध्यतावच्छेदकस्य
तादृशसाध्याभावप्रतियोगितावृत्तित्वस्यैव सत्त्वेन लक्षणसंभव इति
निरस्तम् एवमत्रराद्धान्तापेक्षाया च यमेवाविशेषमालोजयामोयदत्रोक्त
परम्परायागुरुभूतायाः संशर्गत्वंसिद्धान्ते च कल्पे संसर्गविधयाऽ
नुगमे लघुभूतस्य तादृशानवच्छेदकधर्मावच्छिन्नत्वमात्रस्य संसर्ग
त्वमिति एतेन प्रकारतायां निविष्टस्य हेतुमन्निष्ठाभावीयप्रतियोगित्वा
वृत्तित्वधर्मविशिष्ठसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छिन्न
प्रतियोगितातादात्म्यन्तद्धर्म्मावच्छिन्नसमानाधिकरण्यस्यापि व्याप्ति-
त्वं निरस्तम् । सिद्धान्तकल्पापेक्षयाऽनतिविशेषात् एवं सिद्धान्ते
तादृशप्रतियोगितासामान्यनिष्ठस्य गुरुधर्मसाध्यकाव्याप्तिवारकोभ-
याभावस्यात्र तादृशप्रतियोगित्वावृत्तित्वस्य च तादृशोभयनिष्ठस्यैक

पर्य्यवसायित्वादितिध्येयम् यत्तु गुरुधर्म्मसाध्यकाव्याप्तिवारणाय तादृशप्रतियोगिताभिन्नप्रतियोगितानवच्छेदकत्वयत्किञ्चिद्धेत्वधिकरणनिष्ठाधिकरणतानिरूपकतानवच्छेदकत्वोभयाभावस्साध्यतावच्छेदकेविवक्षणीय इति न दोषः निरूपकतावच्छेदकत्वाभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्ननिरूपकतावच्छेदकत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकोबोध्यः नातः साध्यतावच्छेदकसम्बन्धानन्नुयोगिव्यभिचारनिरूपकाधिकरणकव्यभिचरिण्यतिव्याप्तिरिति तन्न प्रागुक्तप्रमेयसाध्यकाव्याप्त्यादिदोषतादवस्थ्यादिति अत एव पारिभाषिकावच्छेदकत्वविवक्षायामुक्तप्रकारेण साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वतादात्म्यसम्बन्धावच्छिन्नयादृशप्रतियोगित्वावच्छिन्नाधिकरणत्वोभयाभावनिवेशे, न कोपि दोषः सद्धेतौ साध्यसाध्यवदन्यतराभावप्रतियोगितामादायलक्षणसंगतिर्व्यभिचारिणि प्रतियोगित्वस्य तादृशस्याप्रसिद्धेर्लक्षणासंभवात् कालोघटवान्महाकालत्वादित्यत्र तादृशाभावप्रसिद्धेरिति निरस्तम् कश्चिदत्र प्रमेयवह्निमान्धूमादित्यत्र तादृशोभयाभावस्य गुरुधर्म्मावच्छिन्नाभावत्वेनाप्रसिद्धेरव्याप्तिस्तद्रूपस्य तादात्म्येनसाध्यतायाम्व्यभिचारिण्यतिव्याप्तिश्च धूमाभावप्रतियोगिसाध्यकेऽतिव्याप्तिवारणाय प्रतियोगितावच्छेदकेतरवारकपर्य्याप्तिमात्रनिवेशेऽपि तद्रूपत्वावच्छिन्नाधिकरणत्वाभावस्य तद्रूपाभावप्रतियोगित्वावच्छिन्नाधिकरणत्वाभावस्य च गुरुधमर्म्मावच्छिन्नाभावत्वात् तत्प्रतियोगित्वावच्छेदकत्वस्य तद्व्यक्तित्व एव कल्पनात् । नच तादृशाधिकरणतात्वसमानाधिकरणोभयावृत्तिधर्म्मस्यैवेतरवारकपर्य्याप्तिर्निवेश्येति वाच्यन्तथासति साध्यसाध्यवदन्यतराभावस्य प्रतियोगिवैयाधिकरण्यवारणाय तादृशाभावत्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगिकूटत्वावच्छिन्नाधिकरणत्वस्यैव निवेशनीयत्वेन तादृशाभावकूटान्तर्गतसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वाभावस्य हेत्वधिकरणे विरहेणाव्याप्त्यापत्तेः उक्तव्यक्तित्वद्वयनिष्ठावच्छेदकतानिरूपितत्वप्रवेशे च वाच्यम् ज्ञेयत्वादित्यादौ तादृशोभयाभावप्रतियोगितावच्छेदकत्वस्य प्रतियोगित्वावच्छिन्नाधिकरणत्वनिष्ठतद्व्यक्तित्वएवकल्पनीयतयाऽव्याप्तेः प्रतियोगित्वावच्छिन्नाधिकरणत्वनिष्ठतद्व्यक्तित्वनिष्ठावच्छेदकत्वनिरूपितत्वप्रवेशे



द्रव्याभावमादाय धूमवान्वह्नेरित्यादावतिव्याप्तिरित्याह तन्न साध्यतावच्छेदकावच्छिन्नाधिकरणत्वसमानाधिकरणोभयावृत्तिधर्म्मनिष्ठावच्छेदकताभिन्नप्रतियोगित्वावच्छिन्नाधिकरणत्वसमानाधिकरणोभयावृत्तिधर्म्मनिष्ठावच्छेदकताभिन्नोभयत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततत्तदुभयावृत्तिनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकूटत्वावच्छिन्नवत्त्वविवक्षायां दोषाभावात् । यद्यप्यन्यूनत्वनियामकस्य प्रतियोगितावच्छेदकत्वे न पारिभाषिकावच्छेदकत्वविक्षाप्रयोजनवती नवा प्रतियोगिताविशिष्टत्वविवक्षणीयम् । साध्ये तत्प्रतियोगित्वविवक्षयैवसामञ्जस्यात्तथाप्युक्तप्रतियोगिव्यधिकरणायस्य चिन्तामणिदीधित्याद्यलक्षणतयाऽव्याप्त्यनुभिरनुपादेयत्वादत्रचकल्पे गुरुधर्मस्य प्रतियोगितावच्छेदकत्वाङ्गीकारेण च गदाधरेणगौरवम्प्रदर्शितं तदपि दोषतया ग्राह्यं नच तन्मते सिद्धान्ते महानसीयवह्न्यभावादिवारणायसाध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वादिविशेषणस्यासत्त्वेन लाघवं युज्यत एव जगदीशमते च सिद्धान्ते तद्विशेषणसत्त्वेनात्र तदभावेनात्रैवलाघवमिति वाच्यमत्रप्रागुक्तप्रतियोगितावच्छेदकत्वपर्य्याप्तेः प्रतियोगिताविशिष्टत्वस्य वा प्रागुक्तस्यैकत्वादेः पर्य्याप्त्यनभ्युपगमेऽव्याप्तिसम्पादकत्वात्सिद्धान्तकल्पानिकृष्टविशेषणापेक्षया गुरुत्वाच्चेतिदिक् ॥ एवमेवच हेतुसमाधिकरणप्रतियोगिव्यधिकरणाभावभिन्नाभावप्रतियोगितावच्छेदकत्वाद्विविवक्षापि हेया । यद्यप्यत्र घटाभावभिन्नंपटत्वादित्यत्राव्याप्तिः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणघटाभावात्मकत्वात्साध्याभावस्य नच तादृशाभावत्वरूपानुयोगिताभिन्नानुयोगितानिरूपितप्रतियोगितावच्छेदकत्वम्विवक्षणीयन्तथाच नाव्याप्तिरिति वाच्यम् । सय्योगसम्बन्धावच्छिन्नवाच्यत्वाभावभिन्नं वाच्यत्वादित्यत्रातिव्याप्तेः साध्याभावस्य वाच्यत्वाभावस्वरूपतया तस्य च तादृशानुयोगिताभिन्नत्वात्तथापि स्वनिरूपितत्वस्वनिष्ठानुयोगित्वानिरूपितत्वोभयसम्बन्धेनतादृशानुयोगिताविशिष्टप्रतियोगितावच्छेदकत्वम्विवक्षणीयन्तथाच नदोष इति कश्चिदुक्तलक्षणानाम्व्यभिचारज्ञानप्रतिबध्यत्वाभावादव्याप्तित्वमाह तदसमंजसं व्यभिचारस्य व्याप्त्यनुसारेण निर्व्वाच्यत्वादसमानप्रकारकयोरपि व्याप्तिव्यभिचारज्ञानयोः प्रतिबध्यप्र-

त्तिवन्धकभावाङ्गीकरणाच्च कथमन्यथा प्रतियोगिताधर्म्मिकोभयाभा-
वादीनां व्याप्तिघटकत्वन्दीधितिकारा द्यनुमतम् कथम्वा व्याप्तिग्रह-
विचारे चिन्तामणिकृता साध्याभाववद्वृत्तित्वस्य व्यभिचारत्वम्व्या-
पकसामाधिनाधिकरण्यस्य च व्याप्तित्वम्बक्ष्यते ॥ * ॥ इत्थमेव
च व्याप्यवृत्तिसाध्यकस्थ ले हेतुसुमानाधिकरणत्वभिन्नत्रवृत्तिताव-
च्छेदकाभावत्वनिरूपितप्रतियोगितावच्छेदकसाध्यतावच्छेदकावच्छि
न्नसामानाधिकरण्यस्यापि व्याप्तित्वं निरस्तम्वेदितव्यमित्यलं पल्लवि-
तेन ॥ * ॥ अथात्र नञोन्तरार्थकत्वेपि तद्यक्त्यभावमादाय प्रस-
ञ्जिताया अव्याप्तेर्व्वारणसम्भवान्नञ्व्यत्यासपक्षोनोचितस्तथाहि
तदवच्छिन्नान्तरत्वञ्च तदवच्छिन्नाविषयकप्रतीतिविषयत्वन्तदनव-
च्छिन्नप्रकारताश्रयत्वम्वा तस्य साध्यतावच्छेदकावच्छिन्नेऽन्वये-
साध्यतायच्छेदके लभ्यते तदवच्छेदकत्वन्तथाच तद्व्यक्तित्वाव-
च्छिन्नाविषयकप्रीतिविषयतावच्छेदकत्वस्य वह्नित्वे सत्त्वान्नाव्याप्ति-
र्न्नवाद्रव्यत्वादिनाधूमत्वावच्छिन्नाविषयकप्रतीतिविषयत्वे प्यतिव्या-
प्ति रादरणीयतमश्चानयोरुत्तरः कल्पः तेन सद्धेतुविशेषे साध्य-
ज्ञानस्य हेत्वधिकरणावृत्तियत्किञ्चित्पदार्थविषयकत्वनियमेपिना-
व्याप्ति रेवंच वह्नित्वावच्छिन्नप्रकारकज्ञानस्य महानसीयव-
ह्नित्वावच्छिन्नाविषयकत्वात्तत्प्रकाताया वा महासीयवह्नित्वानव-
च्छिन्नत्वादव्याप्तिविरेहण वक्ष्यमाणतद्वारकविशेषणमपि नोपादेयमि-
तिचेन्न तत्कल्पे नञ्व्यत्यासपक्षापेक्षयातिगौरवस्य व्यक्तत्वात् न-
चात्र साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वाद्यानिवेशे न ला-
घवमिति वाच्यम् भवेदेवं यदि यथाश्रुत एव महानसीयवह्न्यभावमा-
दायाव्याप्तेर्वारणं सम्भवेत् शुद्धवह्नित्वावच्छिन्नाविषयत्वस्यापि त-
त्प्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्नत्वान्नच तत्सम्भवति प्र-
तियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य
साध्यतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदके निवे-
शश्चपर्य्याप्तीयप्रतियोगिताचतुष्टये निरूपितत्वसम्बन्धावच्छिन्ना-
वच्छेदकताभिन्नावच्छेदकतात्वानिष्ठावच्छेदकताभिन्नावच्छेदकत्वा-
निरुपितत्वचतुष्टयस्य तादृशानुयोगितावच्छेदकत्वचतुष्टयस्य
तत्र प्रविष्टत्वेन साध्यतावच्छेदकतादितरोभयानवच्छिन्नघ-
टितादपि प्रतियोगितानवच्छेदकत्वकल्पादतिगुरुत्वादेकत्वादेः प-



र्य्याप्त्यभ्युपगम एव तन्निवेशस्य सम्भवेन नञ्व्यत्यास-
कल्पेप्येवंसति प्रतियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयो-
गितानवच्छेदकत्वस्यैव निवेश्यतया सुतरामतिगुरुत्वाच्च हेयः ॥
नच साध्यतावच्छेदकगतरूपे विषयतावच्छेदकपर्य्याप्त्यनुयोगिता-
वच्छेदकत्वानिवेशनमेतत्कल्पे व्यर्थं तार्णवह्नेर्विषयितया साध्यतायां
तार्णविषयकवह्निविषयकज्ञानत्वे व्यभिचारिणि तादृशविषताशून्य
केवलवह्निविषयक तार्णविषयकज्ञानविषयतावच्छेदकत्वस्य साध्यता
वच्छेदके सत्त्वेनातिव्याप्तेः । यत्तु पर्य्याप्तिघटितकल्पस्योभयत्रैवासम्भ-
वः तादृशाभावप्रतियोगितावच्छेदकत्वादेरनेकधर्मपर्य्याप्ततयैकत्वद्वि-
त्वादेस्तदनवच्छेदकत्वादिति तत्तुच्छम् तादृशप्रतियोगितावच्छे-
दकत्वादिनिष्ठप्रतियोगितायाः पर्य्याप्तीयायास्तद्व्यक्तिनिरूपितप्र-
तियोगित्वनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेद-
कतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगितात्वेनै-
व तत्र निवेशात् तादृशप्रतियोगिताविशिष्टत्वेन वा रूपस्य
निवेशात् वैशिष्ट्यञ्च स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयो-
गितावच्छेदकत्वसम्बन्धेनेति एवमेकत्वदिः पर्य्याप्त्यनुयोगितान-
वच्छेदकत्वपक्षे स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वा-
निरुपितत्वस्ववृत्तितोभयसम्बन्धेन प्रतियोगिताविशिष्टविषय-
त्वादीनामेव निवेशनयितया वक्ष्यमाणमहानसीयवह्न्यभाववारक
निवेशघटितकल्पापेक्षयात्र गौरवमेव निर्बाधम् ॥ अथ यत्त्वत्रप्रतियोता
वच्छेदकाविषपकप्रतीतिवषयकत्वनिवेशापेक्षपाप्यस्यगुरुत्वं भट्टा-
न्वार्थ्येणाभिहितत्तदसमञ्जसं महानसीयत्वविशिष्टवह्नित्वस्य वह्नित्वा
नतिरिक्ततया वह्नित्वविषयकज्ञानस्य तद्विषयकत्वनिपयमेन महानसी-
यवह्न्यभावमदायाव्याप्तेस्तल्लक्षणस्य दुष्टतया तदवधिकगुरुत्वस्यादोष
त्वात्पर्य्याप्तिघटितनिवेशश्चात्राशक्य एव तथाहि तादृशप्रतियोगिता-
वच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविषयता-
शून्यप्रतीतिविषयतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वं साध्य-
तावच्छेदकगतरूपे विवक्षणीयं तत्र महानसीयत्ववह्नित्वगतद्वित्ववृत्तिवि-
षयत्वस्यासम्भवात् महानसीयत्वे वह्नित्वे च विषयत्वस्यभेदान्महा-
नसीयवह्निसाध्यकव्यभिचारेप्यतिव्याप्तिरव्याप्तिरेव वा महानसीय-
वह्निसाध्यकसद्धेतौ, नच यत्किञ्चिज्ज्ञाननिष्ठनिरूपितत्वसम्बन्धा-

वच्छिन्नावच्छेदकताभिन्नविषयतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितस्वनिष्ठप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वृत्तित्वम्विवक्षितमिति न दोष इति वाच्यम्ः महानसीयत्ववह्नित्वोभयमात्रविषयकज्ञानासम्भवात् महानसीयत्वादेर्म्महानसत्वादेर्वाऽवश्यम्भासनादितिचेदबोधविजृम्भितमेतत् । मुख्यविशेष्यतानिरूपितप्रकारतात्वेनाविषयतान्निवेश्योक्तरीत्या निवेशे दोषाभावात्तादृशरूपाविषयकप्रतीतिविषयत्वस्य साध्यतावच्छेदकगतरूपे निवेशे दोषाभावाच्चेति ॥ अथ प्रतियोगितावच्छेदकावच्छिन्नभेद एवोभयावृत्तिधर्म्मावच्छिन्नाप्रतियोगिकस्सामानाधिकरण्यसम्बन्धेन साध्यतावच्छेदकविशेषणमस्तु नच व्यभिचारिण्यतिव्याप्तिस्तादृशप्रतियोगितावच्छेदकावच्छिन्नत्वसमानाधिकरणोभयावृत्तिधर्म्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्य्याप्तिककूटत्वावच्छिन्नवत्त्वस्य विवक्षणादेवञ्च वह्निनिष्ठतद्व्यक्तित्वावच्छिन्नभेदकूटेन प्रत्येकं सामानाधिकरण्यस्य वह्नित्वे सत्त्वेन नतद्व्यक्त्यभावमादायाव्याप्तिर्नापि च महानसीयवह्न्यभावमादाय वक्ष्यमाणाव्याप्तिरितिकिमिति नञ्व्यत्यासेन व्याख्यानुसरणामितिचेन्न धूमव्यक्तिभेदकूटेन सामानाधिकरण्यस्य प्रत्येकंधूमत्वे सत्त्वेन धूमावान्वह्नेरित्यत्रातिव्याप्तेः सत्तावाञ्जातेरित्यत्र विशिष्टसत्ताभावमादायाव्याप्तेश्च नच तादृशाभावप्रतियोगितावच्छेदकतासमानाधिकरणावच्छेदकताकप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगिकूटत्वावच्छिन्न एव निवेश्योधूमभेदस्यापि तादृशकूटान्तर्गतत्वान्नातिव्याप्तिरव्याप्तिवारणाय चात्रापि प्रतियोगितायाम्वक्ष्यमाणोभयाभाववत्त्वन्निवेश्यमितिवाच्यम् गगनवान्तज्ज्ञानत्वादित्यत्र तद्व्यक्त्यभावमादायाव्याप्तेरिति ध्येयम् ॥ यद्यपि प्रतियोगितायाः प्रतियोगितावच्छेदकस्वरूपतया प्रतियोगिताभेद एव सध्यतावच्छेदके निवेशयितुं युक्तस्तथापि प्रतियोगितायाः प्रतियोगितद्भावोभयस्वरूपत्वेऽतिरिक्तत्वे वा व्यभिचारिमात्रेतिव्याप्तिः प्रतियोगितावच्छेदकभेदनिवेश एव वारयितुंशक्येति तदुपेक्षाकृता ॥ यत्तु प्रतियोगितावच्छेदकावच्छिन्नत्वन्तादात्म्येन वाच्यं व्यभिचारिणितु साध्यवद्भावमादायैव नदोष इति तत्तुच्छम् अवृत्तेरपि व्यापकत्वापत्तेः तत्तद्व्यक्तिमद्भावमादायाव्याप्तेस्तादवस्थ्या-



द्विषयितया जातेः साध्यतायां जातिमद्भावद्रव्याद्यभावमादायाव्याप्तेश्चेति अथ भवतु प्रतियोगितावच्छेदकत्वाभावानिवेश आवश्यकः परन्त्ववच्छेदकताया अवच्छेदकतात्वेन प्रवेशो व्यर्थ इति चेन्न प्रमेयत्वे तादृशप्रतियोगितानिरूपिताधेयत्वस्यैव सत्त्वेन प्रमेयसाध्यकव्याप्तेरिति ॥ यत्तु तादृशावच्छेदकतात्वावच्छिन्ननिरूपकाभाव एव प्रवेश्य इति तत्तुच्छम् धूमसाध्यकाऽतिव्याप्तेः धूमत्वत्वस्वरूपाभावस्य तादृशावच्छेदकतात्वावच्छिन्नाधेयतानिरूपकत्वेन तस्य धूमत्वे सत्त्वात् प्रतियोगितानिरूपितत्वेनाभावप्रवेशोऽपि प्रमेयत्वावच्छिन्नाधेयत्वस्य प्रतियोगितानिरूपितस्य साध्यतावच्छेदकमात्रे सत्त्वेनातिव्याप्त्या हेयः नच प्रतियोगितानिरूपकत्वेनाभावः प्रवेश्य इति वाच्यम् प्रतियोगितावच्छेदकत्वयोः परस्परनिरूप्यनिरूपकभावेनात्रच्छेदकत्वसाध्यकव्यभिचारिण्यतिप्रसङ्गादिति ॥ यद्यपीत्यादि अत्र सामान्याभावस्य साधयिष्यमाणतया विशेषाभावकूटातिरिक्तसामान्याभावस्य सिद्धत्वेन महानसीयवह्न्यभावस्येत्यपहाय महानसीयवह्निर्नास्तीतिप्रतीतिसिद्धस्येत्युक्तम् तथाच सामान्याभावोऽतिरिच्यताम्भावोभयथाप्युक्तप्रतीतौ महानसीवह्निमत्ताबुद्धिविरोधिन्याम्प्रतियोग्यंशे भासमानमहानसीयवह्नित्वावच्छिन्नप्रतियोगिताकाभावत्वेनैवाभावस्य भासमानतया तद्विषयाभावस्य हेतुसमानाधिकरणस्य प्रतियोगितावच्छेदकतायाः कथञ्चिदपि न वह्नित्वे क्षतिरितिभावः॥ ननु निरवच्छिन्नावच्छेदकतानिरूपितत्वमग्रेविवक्षणीयन्तदेवसावच्छिन्नावच्छेदकत्वानिरूपितत्वरूपम्वाच्यन्तावतैवोक्ताभावमादाय न दोषः ॥ सावच्छिन्नसाध्यतावच्छेदकस्थलीयलक्षणेऽपि वक्ष्यमाणं साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नावच्छेदकताकत्वन्तादृशावच्छिन्नावच्छेदकत्वानिरुपितत्वात्मकमेव विवक्षणीयन्तथाच वह्नित्वाश्रयवान्धूमादित्यत्र नाव्याप्तिः अत एव महानसीयवृत्तित्वविशिष्टजातिमद्वह्नित्ववन्नास्तीतिप्रतीतिकाभावमादाय साध्यतावच्छेदकतावच्छेदकतानवच्छिन्नत्वादिविशेषणसत्त्वेऽप्यव्याप्तिरिति निरस्तमिति चेन्न निरवच्छिन्नसाध्यतावच्छेदकस्थलीयलक्षणे माहानसीयवह्निमान्धूमादित्यत्रातिव्याप्तिवारकानिरूपितत्वस्य विवक्षितुमशक्यत्वात् अत्यन्ताभावस्य नित्यप्रतियोगिकत्वमते गोत्ववान् कालत्वादित्यत्र [illegible] भावस्यैव प्रतियोग्यधिकर-

णतया तत्प्रतियोगितायामुक्तानिरूपितत्वविरहेणाव्याप्तिस्सावच्छिन्ना-
वच्छेदकत्वकसाध्यतास्थलीयेऽप्युक्तानिरूपितत्वस्य साध्यतावच्छेद-
कनिष्ठोक्तावच्छेदकत्वानिरूपितत्वरूपस्यैव विवक्षणीयत्वादिति । इद-
मत्रावधेयम् । यत्कश्चिदत्यान्ताभास्य त्रितयप्रतियोगिकत्वमुक्तन्त-
त्प्रतियोगिवत्प्रागभावध्वंसयोरत्यन्ताभावविरोधित्वेनोपचारितप्रति-
योगित्वनिबन्धनन्तयोर्मुख्यप्रतियोगित्वेऽपि घटानिष्ठप्रतियोगित्वा-
त्तदतिरिच्यतामभावाऽवच्छेदकन्तु घटत्वमेव ध्वंसत्वाद्यनुपस्थिता-
वप्यभावबुद्ध्युत्पत्तेः एवं च घटव्यक्त्यभावस्य प्रतियोगिवैयधिक-
रण्यं न दुर्लभम् अस्तु वा घटाद्यत्यन्ताभावबुद्धावभावांशे घटस्य घट-
त्वावच्छिन्नप्रतियोगित्वघटध्वसप्रागभावत्वावच्छिन्नप्रतियोगित्वैरेव
भानं ध्वंसत्वादीनाम्प्रतियोगितावच्छेदकत्वेऽपिहि विशेषणतानवच्छे-
दकत्वादेव न तद्बुद्ध्यपेक्षा तथाप्यभावाघटितनिरुक्तौ घटत्वावच्छि-
न्नप्रतियोगित्वस्य तादृशत्वसम्भवेन न दोषावसर इति । यतु तार्ण-
वह्न्यभावमादायैवाव्याप्तिरतएवादिपदमप्युपात्तमर्थवदिति । ततुच्छम्
वह्नित्वादिसाङ्कर्येण तार्णवह्नितादितरसाधारणतार्णत्वजातेरभावात् ।
वह्निवैजात्यस्य तार्णत्वस्य प्रतियोगिप्रकारत्वे तन्मात्रस्यैवावच्छेदकत्वा-
दिति यादिच्च साङ्कर्यं न जातिबाधकं गुरुधर्म्मस्य प्रतियोगितावच्छे-
दकत्वमिदानीमभिमतन्तदेदमपि साध्वेवेति मन्तव्यम् । परेतु गो-
त्वेनेमञ्जानामीत्यनुव्यवसायान्यथानुपपत्त्योलिख्यमानजातेस्समवा-
यान्यसम्बन्धेन स्वरूपातोभानस्य व्यवस्थापितत्वेन कालिकेन गुण-
त्वविशिष्टरूपाभावमादाय गुणवान्वायुत्वादित्यत्राव्याप्तिरादिपदग्रा-
ह्या । नह्युक्ताभावप्रतियोगितावच्छेदकत्वं रूपत्वमात्रे संम्भवति ज-
लीयपरमाणौ तत्प्रतीत्यनुपपत्तेरित्याहुः ॥ अथैवमपि महानसीयत्व-
व्यवहारस्य रूपादिसाधारणत्वेन कालिकाद्यन्यसम्बन्धेन महानस
वृत्तित्वस्यैव महानसीयत्वरुपतया तदवच्छेदकतायां साध्यतावच्छे-
दकताघटकसम्बन्धावच्छिन्नत्वविरहात्कथमव्याप्तिः । न च वह्नित्व-
निष्ठावच्छेदकतायान्तत्सत्त्वमितिवाच्यम् । साध्यतावच्छेदकताघट-
कसम्बन्धातिरिक्तसम्बन्धावच्छिन्नावच्छेदकत्वानिरूपितत्वस्यैव वि-
वक्षणीयत्वादतएव तादात्म्येन जलसाध्यकसद्धेतौ कालिकेन जलत्व-
विशिष्टत्वे सति समवायेन जजत्वविशिष्टाभावमादाय नाव्याप्तिः । नच
वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टसाध्यकस्थलेऽव्याप्तिवार-



णायातिरिक्तसम्बन्धावच्छिन्नावच्छेदकतायां साध्यतावच्छेदक-
निष्ठत्वस्य वाच्यतया महानसीयवह्न्यभावमादायाव्याप्तिसम्भव इति
वाच्यमुक्तावच्छेदकतानिरूपितत्वस्वनिरूपितावच्छेदकतावत्त्वसम्ब-
न्धावच्छिन्नसाध्यतावच्छेदकवृत्तित्वोभयाभावस्यैव तद्वारणाय वा-
च्यत्वादिति चेन्मैवं तत्सम्बन्धावच्छिन्नवृत्तितायास्तत्सम्बन्धरूपतया-
वह्निनिष्ठमहानसीयत्वस्य वह्निनिष्ठतत्संयोगरूपत्वे तदवच्छेदकतायाः
साध्यतावच्छेदकताघटकसम्बन्धावच्छिनत्वादुक्ततत्परिष्कारेऽपि दो-
षसम्भवादेवञ्च साध्यतावच्छेदकतादितरोभयानवच्छिन्नत्वस्य प्र-
तियोगिताविशेषणत्वेऽवच्छेदकताधर्मिकसाध्यतावच्छेदकताघटक-
सम्बन्धावच्छिन्नत्वस्वक्ष्यमाणरीत्या परिष्कृतमपि साध्वेव नच ता-
दात्म्येन जलसाध्यकाव्याप्तिरनुपदोक्ता तत्र दोष इति वाच्यमुभयान-
वच्छिन्नत्वनिवेश एव हि तद्दोषवारणम्यक्तीभविष्यति ॥ अव्या-
प्तितादवस्थ्यमिति यद्यपि सर्वत्र सद्धेताबुभयाभावादिकमादायाव्या
प्तिसम्भवेनाव्याप्त्यभिधानमनुचितं तत्तथापि यथाश्रुते तादात्म्येन
तद्रूपसाध्यकसद्धेतावव्याप्त्यभावात्समाधेयम् ॥ केचित्तु घटत्वाव-
च्छिन्नाप्रतियोगिकस्ववृत्तिवाच्यत्ववत्तासम्बन्धेन सद्धेतौ घटा-
भावान्याभावस्य प्रतिगिवैयधिकरण्यविरहेणाव्याप्त्यसंभवादव्या-
प्त्यभिधानमेवोच्चितमित्याहुः नच तादृशावच्छेदकतेत्यादि अयमा-
शयः साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयो-
गितावच्छेदकरूपावच्छेदेन तादृशप्रतियोगितावच्छेदकतात्वावच्छि-
न्नाभावोविवक्षणीयः तथाच महानसीयवह्न्यभावप्रतियोगितावच्छेदक-
तायाः प्रत्येकमव्यासज्यवृत्तित्वेऽपि तादृशावच्छेदकतात्वेन व्यासज्य-
वृत्तितया तदवच्छिन्नाभावस्यैकत्वावच्छेदेन वह्नित्वे सत्त्वेनाव्याप्तिः
महानसीयवह्न्यभावप्रतियोगितावच्छेदकता त्वावच्छिन्नाभावस्यैकत्वा-
वच्छेदेन वह्नित्वादौ सत्त्वेऽपि स्वप्रतियोगितावच्छेदकावच्छिन्नपर्य्या-
प्त्यनुयोगितावच्छेदकधर्म्मावच्छेदेन सत्त्वायोगात् महानसीयवह्नि-
मान्धूमादित्यत्र नातिव्याप्तिरिति ॥ * ॥ प्रत्येकमुभयन्नेति एतच्चाव-
च्छेदकत्वनिरुक्तौ विवेचयिष्यामः तथाचैकत्वावच्छेदेनापि तादृशा-
भावस्य वह्नित्वादावसत्त्वेनाव्याप्तितादवस्थ्यमितिभावः नन्वेवं तादृशा-
वच्छेदकतात्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेद एव निवेश्यः
व्यासज्यवृत्तिधर्म्मावच्छिन्नप्रतियोगिताकभेदस्य केवलान्वयित्वात्क-

थमन्यथाऽयमेको न द्वाविति प्रतीतिः गदाधरभट्टाचार्य्यैण निवेशितम
पि तथैवेति चेन्न तर्कालङ्कारमते अत्यन्ताभावस्येव भेदस्यापीदंत्वावच्छे-
देन प्रत्येकेऽनभ्युपगमात् अन्यथा यः प्रत्येकमात्रवृत्तिधर्म्मावच्छेदेन-
यदभाववान्स उभयत्वावच्छेदेन तदभाववानिति व्याप्तेरुभयत्वावच्छे-
देन तत्सत्त्वापत्त्येमौ नद्वाविति प्रतीत्यापत्तेः नचायं न द्वावित्यस्य
कथं प्रमाण्यं शुद्धपर्य्याप्तिसम्बन्धेन द्वित्ववद्भेदस्य सत्त्वायोगादिदन्त्वा-
वच्छेद्यपर्य्याप्तिसम्बन्धावच्छिन्नद्वित्वनिष्ठावच्छेदकताकप्रतियोगिता-
कभेदस्याप्रसिद्धेः द्वित्वस्य धर्म्म्युपसर्ज्जनत्वादनुयोगिवाचकपदो-
त्तरसप्तम्यभावाच्च तत्सम्बन्धावच्छिन्नद्वित्वाभावस्य बोधयितुम
शक्यत्वादिति वाच्यमुक्तनियमानुराधेनात्यन्ताभावबोधनियमस्य स-
ङ्कोचकल्पनादिति भट्टाचार्य्यैण तूक्तनियमस्याप्रयोजकत्वमङ्गीकृत्वे-
दन्त्वावच्छेदेन द्वित्वात्यन्ताभाववद्भेदौ स्वीकृतौ तथासतीमौनद्वा-
विति प्रत्ययाप्रसङ्गात् । एवंचायं नद्राविति प्रतीतिरपिभेदविषयिण्येवे-
त्यत्यन्ताभावबोधनियमो न संकोचनीयः इति तेषां तादृशनिवेशोयुक्त
इति विवेकः अथ साध्यतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगिता-
वच्छेदकरूपावच्छेद्यपर्य्याप्तिसम्बन्धावच्छिन्नतादृशावच्छेदकत्वाभा-
वस्य तादृशरूपावच्छेदेन निवेशे न कोपिदोष इति चेत्सत्यमत्यन्ता-
भावगर्भे तत्र न दोषः भेदगर्भे तादृशनिवेशासम्भवात् कल्पद्वयसाधा-
रण्यायोभयानवच्छिन्नत्वम्बक्ष्यतीत्यवधेयम् एकत्वादेः पर्याप्त्यनभ्यु-
पगमे साध्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदके ता-
दृशप्रतियोगितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितान वच्छेदक-
त्वविवक्षाया असंभवात्सोपेक्षितेतिबोध्यम् । यद्यपि साध्यतावच्छे-
दकावच्छिन्नत्वसाध्यतासमानाधिकरणभेद प्रतियोगितावच्छेदकत्वो-
भयाभावनिवेशे न महानसीयवह्न्यभावमादायाव्याप्तिवारणसंभवस्त-
थापि वह्निघटोभयाभावस्य सत्तासाध्यके विशिष्टसत्त्वाभावस्य च
वारणसंभवेनाव्याप्त्या तत्परित्यज्यगुरुभूतमप्युभयानवच्छिन्नत्वन्त-
द्वारणयाह तथापि साध्यतावच्छे कतदितरोभयेति अथ किमुभयान-
वच्छिन्नत्वमेकावच्छिन्नत्वविशिष्टापरावच्छिन्नत्वाभावः किम्बा तदु-
भयनिष्ठावच्छेदकतानिरूपितत्वाभावः तादृशावच्छेदकतानिरूपित-
त्वद्वयाभावो वा तत्र नाद्यः प्रमेयवद्वान्वाच्यत्वादित्यत्र घटत्वादेस्सा-
ध्यतावच्छेदकत्वाद्वक्ष्यमाणरीत्या तदितरत्वाच्चेति घटाद्यभावीयप्र-



तियोगितायां स्वविशिष्टस्यैव सत्त्वेनाव्याप्त्यापत्तेः नच साध्यता-
वच्छेदकावच्छिन्नत्वविशिष्टसाध्यतावच्छेदकेतरावच्छिन्नत्वाभावप्र-
तियोगितावच्छेदकत्वस्य प्रमेयेतरावच्छिन्नत्वत्व एव कल्पनीयतया
सामान्याभावस्याप्रसिद्धेः साध्यतावच्छेदकतासमानाधिकरणाधे-
यत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदक
तानिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपिता-
सती साध्यतावच्छेदकेतरत्वसमानाधिकरणावच्छेदकतानिरूपिता-
वच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वत्वनिष्ठावच्छेदकता-
कप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्य्याप्तिककूटत्वावच्छि-
न्नवत्त्वमेव निवेशनीयन्तत्र तादृशविशिष्टाभावोहि न घटत्वावच्छि-
न्नत्वविशिष्टघटत्वावच्छिन्नत्वाभावो गुरुधर्म्मस्य प्रतियोगितान-
वच्छेदकत्वेनाप्रसिद्धेः किन्तु घटत्वावच्छिन्नत्वविशिष्टपटत्वावच्छि-
न्नत्वाभाव एव सच घटाद्यभावप्रतियोगितास्वस्त्येवेति नाव्याप्तिरिति
वाच्यङ्गुरुधर्म्मस्य प्रतियोगितावच्छेदकत्वपक्षे गत्यभावात् यत्त्वव-
च्छिन्नत्वस्यैकस्याभावेन प्रतियोगितानिष्ठस्यैव तस्य प्रवेशनीयतया
प्रमेयसाध्यकाव्याप्तिः प्रमेयघटाद्यभावप्रतियोगितावच्छेदकत्वस्य घ-
टत्वमात्रे कल्पनीयतया प्रमेयत्वावच्छिन्नत्वविशिष्टघटत्वाद्यवच्छिन्नत्व-
स्याप्रसिद्धेरिति तन्न साध्यतावच्छेदकनिष्ठावच्छेदकतायी साध्य-
तावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्यानिवेशनीयतया विषयि-
तया प्रमेयत्ववज्ज्ञानाभावप्रतियोगितायामुभयावच्छिन्नत्वसम्भवात्
नापि द्वितीयः जातिमद्वान् ज्ञानत्वादित्यत्र साध्यतावच्छेदकयत्कि-
ञ्चिज्जातिवक्ष्यमाणतदितरत्ववज्जात्यन्तरोभयनिष्ठावच्छेदकतानिरू-
पितत्वस्य साध्याभावप्रतियोगितायां सत्त्वेनातिव्याप्तेः । न तृतीयः
प्रतियोगिनिष्ठनानाविशेष्यतानिरूपितावच्छेदकप्रकारतास्थल एवा-
वच्छेदकताभेदस्य शक्तिवादादावुक्तत्वेन महानसीयवह्न्यभावप्रतियो-
गितायामुभयाभावसत्त्वादव्याप्त्यापत्तिरिति चेदुच्यते सावच्छिन्नत्व
निरवच्छिन्नत्वादिविरुद्धधर्म्माध्यासेनावच्छेदकताभेदस्यैव प्रामाणि-
कतयोभयाभावनिवेशोनिर्दुष्ट एवेति केचित्तूभयमतसाधारण्यानुरो-
धेन साध्यतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वघटितविशि-
ष्टाभावोनिवेश्यः वैशिष्ट्यं च स्वसाजात्यस्वसामानाधिकरण्योभय-
सम्बन्धेन एवंच घटाभावीयप्रतियोगितायां सावच्छिन्नावच्छेदकता-

निरुपितत्वविरहेण विशिष्टाभावसत्त्वान्न प्रमेयवद्वान् वाच्यत्वादित्यत्राव्याप्तिः नच वह्नित्ववद्वान्धूमादित्यत्र महानसीयवह्न्यभावमादायाव्याप्तिः प्रतियोगितानिरुपितावच्छेदकताविशिष्टान्यत्वस्य साध्यतावच्छेदकतायाम्विवक्षितत्वात् वैशिष्ट्यं च प्रागुक्तोभयसम्बन्धेनेति अतएव घटसमवेतत्वविशिष्टाभावमादायाव्याप्तिवारणाय वक्ष्यमाणोभयानवच्छिन्नत्वस्य ध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वार्थकताया आवश्यकतया घटत्ववदभावस्य लक्षणाघटकत्वात् घटाभावीयप्रतियोगितानिरूपितसावच्छिन्नावच्छेदकत्वाप्रसिद्धेः प्रमेयवत्साध्यकाव्याप्त्या प्रतियोगितानिरुपितावच्छेदकतायां महानसीयवह्न्यभावमादायाव्याप्तिम्वारयितुं सावच्छिन्नत्वनिवेशस्य कर्तुमशक्यत्वेऽपि न क्षतिरिति वदन्ति यद्यपि साध्यतावच्छेदकवृत्तिभेदप्रतियोगित्वरूपतदितरत्वस्य प्रमेयवद्वान्वाच्यत्वादित्यत्र नाप्रसिद्धिस्तथापि तथाविवक्षणे महानसीयवह्निभिन्नवह्निमान्धूमादित्यत्रातिव्याप्तिः साध्यतावच्छेदकस्यैकस्यापरसाध्यतावच्छेदकवृत्तिभेदप्रतियोगित्वेन तदितरत्वादित्यतइतरपदस्यान्तरार्थकतामभ्युपेत्याह स्वानवच्छिन्नप्रकारतावच्छेदकेति अत्र स्वानवच्छिन्नप्रकारताश्रयत्वोक्तौ यद्यपि वह्निनिष्ठप्रकारताया वह्नित्वावच्छिन्नायास्स्वानवच्छिन्नत्वविरहेपि द्रव्यत्वावच्छिन्नायास्तथात्वेन वह्निविशिष्टवह्न्यभावमादाय वह्निमान् धूमादित्यत्र नाव्याप्तिः तथापि महानसीयवह्निमान्धूमादित्यादावतिव्याप्तिः साध्यतावच्छेदकस्यापि साध्यतावच्छेदकेतरत्वादिति प्रकारतावच्छेदकपर्य्यन्तानुधावनं स्वानवच्छिन्नत्वं च साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वं तेनावच्छिन्नप्रकारतामात्रस्य प्रमेयावच्छिन्नत्वेऽपि प्रमेयसाध्यतावच्छेदकस्थले नाव्याप्तिः वैशिष्ट्यं च स्वसामानाधिकरण्यस्वानवच्छेदकानवच्छिन्नत्वोभयसम्बन्धेन स्वसामानाधिकरण्योपादानान्निरवच्छिन्नावच्छेदकताद्वयनिरुपितप्रतियोगिताकाभावङ्कालिकेन गुणत्वविशिष्टं रूपं नास्तीतिप्रतीतिसिद्धमादाय गुणवान्वायुत्वादित्यत्र नाव्याप्तिः यत्तु स्वसाजात्यस्वसामानाधिकरण्योभयसम्बन्धेन वैशिष्ट्यम्वाच्यमिति तन्न समवायेन वह्निविशिष्टस्य संयोगेन साध्यतायान्धूमे सद्धेतौ समवायेन वह्निविशिष्टमहानसीयविशिष्टाभावमादायाव्याप्तेः अवच्छेदकभेदेनावच्छेदकताया भिन्नत्वे जातिमदभावप्रतियोगितायां घटत्वावच्छिन्नावच्छेदकताकतादृशप्रकारतावच्छेदकघटत्वावच्छिन्नत्वसत्त्वेन जातिमत्साध्यकव्यभिचारिण्यतिव्याप्तिवारणाय प्रकारतावच्छेदकावच्छिन्नत्वमपि प्रकारतावच्छेदकताविशिष्टावच्छेदकतानिरुपितत्वमेव वाच्यं वैशिष्ट्यं च स्वसामानाधिकरण्यस्वानवच्छेदकानवच्छिन्नत्वोभयसम्बन्धेन एवंचावच्छेदकभेदेनावच्छेदकताभेदाभावेऽपि तादृशप्रकारतानिरुपितावच्छिन्नावच्छेदकतावद्वह्नित्वावच्छिन्नत्वस्य महानसीयवह्न्यभावप्रतियोगितायां सत्त्वेन महानसीयवह्निमान्धूमादित्यत्रातिव्याप्तिरिति निरस्तम् स्ववृत्तित्वप्रवेशेन दोषासम्भवात् अनवच्छिन्नघटत्वनिष्ठावच्छेदकतायास्तादृशप्रकारतानिरूपिताया वैशिष्ट्यस्यानवच्छिन्नवह्नित्वनिष्ठावच्छेकतायां सत्त्वेन महानसीयवह्निमान्धूमादित्यत्रातिव्याप्तेः स्वसामानाधिकरण्यवत्त्वात्। अथ कालिकेन महानसीयत्वविशिष्टं सत्समवायेन वह्नित्वविशिष्टं यत्र साध्यं तत्र सत्त्वेनाव्याप्तिः समवायेन महानसीयत्वविशिष्टस्य कालिकेन वह्नित्वविशिष्टो नास्तीतिप्रतीतिसिद्धाभावीयप्रतियोगितायामुक्तादितरोभयानवच्छिन्नत्वात् एवङ्गुणत्ववद्वान्द्रव्यत्वादित्यत्र जलीयपरमाणौ प्रतियोगिव्यधिकरणहेतुसमानाधिकरणं कालिकविशेषेण गुणत्वविशिष्टं सत्समवायेन गुणत्वविशिष्टन्नास्तीतिप्रतीतिसिद्धाभावमादायाव्याप्तिरिति नचोक्ताभावयोः प्रतियोगिवैयधिकरण्यासम्भव इति वाच्यमुक्तरीत्या साध्यतायाम्व्यभिचारिण्यतिव्याप्तेः प्रतियोगिवैयधिकरण्यस्य परिष्क्रियमाणत्वादिति चेन्न साध्यतावच्छेदकतावैशिष्ट्यस्य स्वावच्छेदकसम्बन्धावच्छिन्नत्वघटितचतुष्टयसम्बन्धेनोक्तौ दोषाभावात् एवंचोक्तसाध्यकव्यभिचारिणि साध्याभावप्रतियोगितायामुभयानवच्छिन्नत्वसम्पत्यर्थं प्रकारतावच्छेदकतावैशिष्ट्यमपि स्वावच्छेदकसम्बन्धावच्छिन्नत्वघटितचतुष्टयसम्बन्धेनैव वाच्यमिति दिक् । यद्रूपेणसाध्यतावच्छेदकस्य साध्यतावच्छेदकतेति क्वचित्पाठः अथात्र महानसीयवह्निमान्धूमादित्यत्र व्यभिचारिण्यतिव्याप्तिः वह्नित्वस्य स्वरूपत एव साध्यतावच्छेदकत्वेन तादृशप्रकारतावच्छेदकतया तदवच्छिन्नत्वस्य साध्याभावीयप्रतियोगितायां सत्त्वादिति चेन्नैतस्याप्युक्तार्थ एव तात्पर्य्यात् अत एवानवच्छिन्नावच्छिन्नसाध्यतावच्छेदकतास्थलीयलक्षणयोरेकोक्तिसम्भवः केचित्तु प्रकारतावच्छेदकनिष्ठसावच्छिन्नावच्छेदकतानिरूपितत्वमेव विवक्षणीयामिति तत्प्रतियोगितायां

सावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपितत्वविरहान्नातिव्याप्तिरिति वदन्ति तदसत् गुणत्ववद्वान् वायुत्वादित्यत्र कालिकविशेषण स्वरूपतो रूपत्वविशिष्टस्य गुणत्ववतोऽभावमादायाव्याप्तेरिति ॥वस्तुतस्तु लाघवेन साध्यतावच्छेदकानिष्ठावच्छेदकतानिरूपितत्वसाध्यतावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वोभयाभाव एव साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वशब्दार्थो वाच्यः वैशिष्ट्यंच प्रागुक्तचतुष्टयसम्बन्धेनेति अथ साध्यतावच्छेदकताविशिष्टान्यसमवायनिष्ठावच्छेदकतानिरूपितत्वस्य समवायावच्छिन्नवह्न्यभावप्रतियोगितायां सत्त्वेन तस्य लक्षणाघटकतया साध्यतावच्छेदकसम्बन्धावच्छिच्छिन्नत्वनिवेशोवक्ष्यमाणोव्यर्थः साध्यतानिरूपितावच्छेदकतात्वस्य धर्म्मनिष्ठसंसर्गनिष्ठावच्छेदकतासाधारणस्य प्रवेशात्संसर्गतायान्तादृशावच्छेदकताविशिष्टान्यत्वासम्भवेनातिव्याप्त्यप्रशक्तेर्विशिष्टान्यावच्छेदकतायां सम्बन्धावच्छिन्नत्वप्रवेशे प्रयोजनाभावात् एवंच स्वावच्छेदकसम्बन्धावच्छिन्नत्वं स्वानवच्छेदकसम्बन्धानवच्छिन्नत्वरूपं वाच्यमन्यथातिव्याप्तेः नच समवायस्यापि परम्परया साध्यतावच्छेदकत्वमेवेतिवाच्यं महानसीयकालीनवह्निमान् धूमादित्यत्र महानसीयवह्न्यभावमादायाव्याप्तेस्साक्षात्साध्यतानिरूपितत्वस्यैव प्रवेश्यत्वात् नच तत्र कालीनत्वरूपं साध्यतावच्छेदकमनवच्छेदकन्तादृशप्रतियोगिताया इति नाव्याप्तिरिति वाच्यम् घटवृत्तिरूपविशिष्टस्य संयोगेन साध्यतायान्तद्भूतलत्वे रूपवद्घटवृत्त्यभावमादायाव्याप्तेः घटवृत्तितात्वेन घटवृत्तितामात्रस्य परम्परावच्छेदकत्वात् । एवञ्च विशिष्टान्यावच्छेदकतानिरूपितत्वमपि साक्षादेव ग्राह्यमन्यथामहानसीयवह्निवृत्तित्वविशिष्टजातिमत्साध्यकव्यभिचारिण्यतिव्याप्तिरिति चेन्न संयोगिनः कालिकेन साध्यतायां स्पन्दत्वे सय्योगिन स्सय्योंगेनाभावमादायाव्याप्तेर्वारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेश्यत्वात् यत्त्ववच्छेदकभेदेनावच्छेदकताया भेदे सत्त्वद्रव्यत्वादिनिष्ठावच्छेदकतायाम्बिशिष्टान्यत्वसम्भवेन महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावमादायाव्याप्त्यसम्भवान्निरवच्छिन्नत्वनिवेशोव्यर्थ इति तत्तुच्छम् महानसीयवृत्तित्वविशिष्टवह्नित्ववदभावमादायाव्याप्तेर्दुरुद्धरतया तन्निवेशावश्यकत्वात् अवच्छेदकतादेरवच्छेदकरूपतायामेव भेदसम्भ-



वेन तस्य चासिद्धान्ततया यथाश्रुतेऽपि निर्वाहसम्भवाच्चेति ॥ * ॥

अथ साध्यवद्वृत्त्यभावीयत्वसाध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभाव एव प्रतियोगिताविशेषणमस्तु किंप्रकृतोभयाभावनिवेशनेन एवञ्चावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वं निरवच्छिन्नत्वादिकं च प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं च न निवेश्यं प्रयोजनानुपलम्भात् प्रतियोगिवैयधिकरण्यञ्च प्रतियोगितावच्छेदकसम्बन्धेन ग्राह्यं नातः कालिकेन महानसीयवह्न्यभावमादायाव्याप्तिः नवा स्वरूपाधेयत्वान्यतरसम्बन्धेन वह्निसाध्यकवह्नित्वे साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकत्वाभावस्य प्रतियोगिवैयधिकरण्यविरहेऽप्यव्याप्तिः साध्यतावच्छेदकताभेदस्य प्रतियोगिवैयधिकरण्यसम्भवात्।नचावच्छेदकताया अवच्छेदकस्वरूपतानये तादात्म्येन प्रमेयविशिष्टस्य तादात्म्येन साध्यतायां घटत्वविशिष्टे घटत्वे वा प्रमेयावच्छिन्नसाध्यतानिरूपितावच्छेदकतात्वे सद्धेतौ साध्यतानिरूपितावच्छेदकत्वाभावस्य प्रतियोगितावच्छेदकसम्बन्धमात्रेणैव स्वप्रतियोग्यधिकरणहेत्वधिकरणवृत्तित्वादतिव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकतात्वनिष्ठावच्छेदकतायां स्वरूपसम्बन्धावच्छिन्नत्वनिवेशे प्रयोजनविरहेण विषयितया साध्यतावच्छेदकतात्वविशिष्टाभावस्य प्रतियोगिवैयधिकरण्यसम्भवात् । स्ववृत्तिभेदीयघटत्वावच्छिन्नप्रतियोगितासम्बन्धेन पटसाध्यकघटत्वहेतावपि साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकत्वाभावस्य प्रतियोगिवैयधिकरण्यविरहेऽपि प्रतियोगितावच्छेदकस्वरूपेण तत्सम्भवः । केचित्त्वत्राभाववान्वाच्यत्वादित्यत्र गुणाभावाभावं गुणाधिकरणत्वात्मकाभावञ्चादायाव्याप्त्या स्वरूपसंयोगसमवायैः प्रत्येकं घटत्वाभावस्य कालिकेन योभावस्तस्य स्वरूपेण साध्यतायां वाच्यत्वे व्यभिचारिणि साध्याभावस्य घटत्वाभावात्मकस्य स्वरूपेणात्मवृत्तित्वादतिव्याप्त्या स्वरूपसमवायसंयोगान्यतमेनोक्तसाध्यकात्मत्वे सद्धेतौ साध्यवत्ताबुद्धिविरोधिताघटकेन कालिकेन साध्यवद्वृत्तित्वाप्रसिद्ध्या जात्यभावसाध्यकसद्धेतौ साध्यवन्निरूपितवृत्तित्वाप्रसिद्ध्याचाव्याप्त्या साध्यवत्ताबुद्धिविरोधिताघटकसम्बन्धेन च साध्यवद्वृत्तित्वस्य विवक्षितुमशक्यतया स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेन तद्वाच्यमिति

जात्यभावाभावप्रतियोगिमत्ताग्रहाविरोधिताघटकसमवायेन साध्यवद्वृत्तित्वाप्रसिद्ध्याऽभावान्तरमादाय जात्यभाववान्वाच्यत्वादित्यत्रातिव्याप्तिरिति वदन्ति तदसत् सध्यवद्यत्किञ्चिन्निरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वाभाववत्स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नाधिकरणत्वानिरूपकत्वस्य विवक्षितत्वात् वस्तुतस्तु स्वपदमत्र न लक्षणघटकाभावपरं किन्तु साध्यवद्वृत्त्यभावपरमिति यथाश्रुत एव हि न दोषस्य सम्भव इति यत्तु कपिसंयोगाभावस्य तद्व्यक्त्यभावस्य च साध्यवद्वृत्तित्वेन लक्षणाघटकतया प्रतियोगिवैयधिकरण्यमनवच्छेदकत्वं च नानुसरणीयम् इति तत्तुच्छम्। अव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वपक्षेऽपि शुद्धस्वरूपेण तादृशेन संयोगाभावस्य साध्यवद्वृत्तितया संयोगी सत्त्वादित्यत्रातिव्याप्तेर्वारणाय निरवच्छिन्नत्वविशेषिततादृशसम्बन्धेनैव साध्यवद्वृत्तित्वस्य वाच्यत्वादव्याप्तेः नच गुणावृत्तित्वावच्छिन्नाभावस्य साध्यवद्वृत्तित्वविरहादतिव्याप्तिविरहेण निरवच्छिन्नत्वन्न विशेषणमितिवाच्यं सम्बन्धविशेषावच्छिन्नत्वस्याविशेषणत्वे स्ववृत्तिभेदीयवह्नित्वावच्छिन्नप्रतियोगितास्वरूपान्यतरसम्बन्धेन साध्यतावच्छेदकतात्वविशिष्टस्य समवायेनाभावमादाय वह्निमान्धूमादित्यादावव्याप्त्यापत्तिरित्यनवच्छेदकत्वानुसरणस्यावश्यकतया गुणावृत्तित्वावच्छिन्नाभावमादायातिव्याप्तिवारणासम्भवात् यदि च परंपरासम्बन्धेन संयोगत्वविशिष्टाभावं व्याप्यवृत्तिमादाय नातिव्याप्तिरित्युच्यते तदा सम्बन्धविशेषेण हेतुसामानाधिकरण्यस्य वाच्यतया यथासन्निवेशे, न प्रतियोगिवैयधिकरण्यस्य वैयर्थ्यमिति गृहाण एतेन संयोगसाध्यकव्यभिचारिण्यतिव्याप्तिवारणाय स्वप्रतियोगिमत्ताबुद्धिविरोधिताघटकसम्बन्धस्य निरवच्छिन्नत्वविशेषितत्वे तद्वृक्षवृत्तिकपिसंयोगाभावैतद्वृक्षवृत्तिकपिसंयोगाभावान्यतरस्य निरवच्छिन्नस्वरूपेण साध्यतायां वृक्षत्वे सद्धेतौ प्रत्येकाभावमादायाव्याप्तिवारणायानवच्छेदकत्वानुसरणं सति च तस्मिन्नतिव्याप्तिवारणाय निरवच्छिन्नत्वस्य विशेषणत्वमित्यन्योन्याश्रयोऽप्यपास्तः साध्यवद्वृत्त्यभावीयत्वञ्च साध्यवन्निरूपितवृत्तित्वावच्छेदकानुयोगिताविशिष्टत्वं वाच्यं तेन विशिष्टसत्ताभाववाञ्जातेरित्यादौ नातिव्याप्तिः वैशिष्ट्यञ्च स्वनिरूपितत्वस्वनिष्ठानुयोगित्वानिरूपितत्वोभयसम्बन्धेन तेन साध्यवन्निरू-



पितवृत्तितावच्छेदकसंयोगसम्बन्धावच्छिन्नवाच्यत्वाभावस्य साध्याभावरूपत्वेऽपि संयोगसम्बन्धावच्छिन्नवाच्यत्वाभावभिन्नं बाच्यत्वादित्यत्र नातिव्याप्तिरिति चेन्नैवमवच्छेदकतावान् वाच्यत्वादित्यत्र साध्यतानिरूपितावच्छेदकत्वाभावीयतादृशप्रतियोगितावच्छेदकस्य साध्यतावच्छेदके सत्त्वेनाव्याप्तेरेतेन साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यघटितकल्पे स्ववृत्तिभेदीयघटत्वावच्छिन्नप्रतियोगितासम्बन्धेन पटसाध्यकघटत्वे साध्यतावच्छेदकत्वाभावस्य प्रतियोगिवैयधिकरण्यविरहेणाव्याप्तिवारणाय निरवच्छिन्नत्वाभावप्रतियोगितावच्छेदकत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावो विवक्षणीयः। तथा च घटाभावत्वीय प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावत्वान्न दोषः। एवं कालान्तरेऽपीत्यपि निरस्तम्। अथ प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यं वाच्यन्तादृशोभयाभाववत्प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकत्वाभावश्च साध्यतावच्छेदकतात्वानवच्छिन्नप्रतियोगितावच्छेदकत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको विवक्षणीयः। तथाच साध्यतावच्छेदकत्वाभावप्रतियोगितावच्छेदकत्वस्योक्तसम्बन्धव्यधिकरणत्वेन तेन सम्बन्धेन तदभावस्य केवलान्वयित्वेन न क्वाप्यव्याप्तिसम्भावना। अत्र साध्यतावच्छेदकतात्वानवच्छिन्नत्वं प्रकृतसाध्यघटितमन्यथा सम्बन्धकोटिप्रविष्टे तत्र तदनिवेशे घटत्वावच्छिन्नसाध्यतावच्छेदकत्वसाध्यकवाच्यत्वेऽतिप्रसङ्गात्। साध्याभावप्रतियोगिताया अवच्छेदकस्योक्तसम्बन्धव्यधिकरणत्वात् उभयाभावघटके तदनिवेशेऽवच्छेदकतावान्वाच्यत्वादित्यत्राव्याप्तेः घटत्वावच्छिन्नसाध्यतावच्छेदकत्वाभावप्रतियोगितावच्छेदकत्वस्योक्तसम्बन्धाव्यधिकरणत्वात्।प्रकृतसाध्यतावच्छेदकनिष्ठावच्छेदकतात्वानवच्छिन्नत्वमपि न वाच्यं घटत्वनिष्ठावच्छेदकत्वे साध्ये घटत्वस्यापि साध्यतादच्छेदकतया साध्याभावप्रतियोगितायां तादृशावच्छेदकतात्वानवच्छिन्नत्वविरहादतिव्याप्तेस्सम्बन्धकोटौ तदप्रवेशेऽवच्छेदकतासाध्यके सद्धेतौ अवच्छेदकतात्वनिष्ठावच्छेदकत्वाभावमादायाऽव्याप्तिवारणायोभयाभावकोटावप्यप्रवेशयत्वादिति एवंच साध्यतावच्छेदकत्वोभयाभावमादायाव्याप्तेरसम्भ-

वेन पूर्वकल्पवत्साध्यतावच्छेदकतात्वानवच्छिन्नत्वं साध्यतावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वरूपन्नात्र वाच्यमितिचेदुच्यते वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वाभावपक्षे साध्यतावच्छेदकवृत्त्यनियामकसम्बन्धेन साध्याधिकरणे सम्बन्धान्तरावच्छिन्नसाध्याभावमात्रस्य यत्र स्ववृत्तिभेदीयतत्परमाणुत्वावच्छिन्नं प्रतियोगित्वसम्बन्धेनैतत्परमाणुसाध्यकपरमाणुत्वे हेतौ व्यभिचारिणि वृत्तित्वं तत्रातिव्याप्तिरत्र कल्पे दुरुद्धरा सिद्धान्ते त्वतिव्याप्तिशङ्कानेति यदि च गगनादेस्स्वरुपेण वृत्तिमत्त्वपक्षे प्रतियोगिताधर्म्मिकोभयाभावघटितलक्षणस्य वक्ष्यमाणत्वेन तत्र वृत्यानियामकसम्बन्धस्याभावप्रतियोगितावच्छदकताया अभ्युपगन्तव्यत्वादवच्छेदकताधर्म्मिकोभयाभावस्य वा विवक्षणीयत्वादत्रापि वृत्त्यनियामकस्य प्रतियोगितावच्छेदकत्वमङ्गीकार्यं प्रतियोगितावच्छेदकतायां साध्यवद्वृत्त्यभावीयप्रतियोगितानिरूपितत्वसाध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभाववत्त्वं साध्यतावच्छेदकतात्वानवच्छिन्नावच्छेदकतावच्छेदकत्वीयस्वरूपसम्बन्धावच्छिन्नतदवच्छेदकत्वाभववत्त्वं साध्यतावच्छेदके प्रतियोगिकावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकानाधिकरणत्वघटितं प्रतियोगिवैयधिकरण्यं च वा विवक्षणीयन्नहि महानसीयवह्निमद्भावमादायाव्याप्तिवारणायावच्छेदकतायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वं समवायेनवह्निमद्भावमादायाव्याप्तिवारणाय साध्यतावच्छेकावच्छिन्नत्वसाध्यतावच्छेदकसन्बन्धावच्छिन्नत्वोभयाभाववत्त्वम्वा विवक्षणीयमिति विभाव्यते । तदापि गगनादेरवृत्तित्वेपक्षीयप्रतियोगितानवच्छेदकसाध्यतावच्छेदकघटितयथाश्रुते तदितरोभयानवच्छिन्नत्वमेव प्रतियोगिताविशेषणं वक्तुमुचितमणुरपि विशेषोध्यवसायकर इति न्यायात् । ननु गगनादेः स्वरुपेण वृत्तित्वपक्षे किमित्यतिलघुभूतस्य साध्यतावच्छेदकतात्वानवच्छिन्नत्वघटितस्यानुपदोक्तस्य न लक्षणत्वमिति चेत्तस्य लक्षणत्वन्तु न वारयामः सद्धेतोः किन्त्वनुमित्यनुकूलव्याप्तित्वन्तथासति प्रकृतानुमितित्वानवच्छिन्नत्वघटितोभयाभावस्य साध्यतात्वानवच्छिन्नत्वघटितोभयाभावस्य साध्यतानिरूपितसंसर्गत्वतदवच्छेदकत्वतत्त्वाद्यनवच्छिन्नत्वघटितोभयाभावस्य साध्यतावच्छेदकावच्छिन्नप्रकारतात्वाद्यनवच्छिन्नत्वघटितोभयाभावस्य च व्याप्तिघ-



टकत्वं स्याद्विनिगमकाभावात् । साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वस्यैव तथात्वे किं विनगमकमिति चेत्तद्घटकपदार्थोपस्थितेः क्लृप्तत्वमक्लेशकल्पत्वम्वा प्रकृतानुमितेः पूर्वं प्रकृतानुमितितद्विधेयत्वादेश्चोपस्थिति र्न सर्वेषां क्लृप्ता नाप्यक्लेशेन कल्पनीयेतिगृहाण । एतेन वृत्त्यनियामकसम्बन्धसाध्यतावच्छेदकव्यभिचारिणि साध्यतावच्छेदकसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकाकच्छिन्नसम्बन्धितात्त्वान्यतरविशिष्टाभावमादायातिप्रशक्त्यभावेऽपि न क्षतिः । एवं सामान्यधर्म्मावच्छिन्नाधिकरणत्वास्वीकारे साध्यवत्त्वस्य पारिभाषिकस्य वक्तव्यतया लाघवाभावोऽप्यत्र दोषः । विशेषरूपेण संसर्गत्वानभ्युपगमे निवेशासम्भोऽपि, चेत्यलम्पल्लवितेन ॥*॥ अत एव परिष्कृतसाध्यतावच्छेदकातिरिक्तधर्म्मानवच्छिन्नप्रतियोगितावच्छेदकत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वनिष्ठप्रतियोगिताकाभावविवक्षापि हेया । अत एव साध्यवद्वृत्त्यभावीयत्वयत्किञ्चित्साध्यतावच्छेदकावृत्तित्वोभयाभाववत्त्वम्प्रतियोगिताविशेषणमस्तु प्रतियोगिवैयाधिकरण्यं चात्र प्रतियोगितावच्छेदकसम्बन्धेनैवग्राह्यं नातस्तादात्म्यसमवायानातरसम्बन्धेन वह्निसाध्यकवह्नित्वेसद्धेतौ साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकाभावस्य प्रतियोगिवैयधिकरण्यविरहेऽप्यव्याप्तिः नच वह्निमतस्तादात्म्येन साध्यतायां धूमे वह्निमद्वृत्त्यभावमादायाव्याप्तिरिति वाच्यं तादृशोभयाभाववत्प्रतियोगितावच्छेदकत्वाभावस्य स्वघटकप्रतियोगितावृत्त्युभयाभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्साध्यतावच्छेदकावृत्तिप्रतियोगितावच्छेदकत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकस्य विवक्षितत्वात् । एवं च साध्यतावच्छेदकातिरिक्तवृत्तित्वविवक्षामन्तरेणापि साध्यसाध्यतावच्छेदकोभयाभावप्रयुक्ताव्याप्त्यसम्भवः । साध्यतावच्छेदके सम्बन्धघटके तादृशावच्छेदकतावत्त्वविशेषणात्तादात्म्येन प्रमेयवत्साध्यके नाव्याप्तिरित्यप्यपास्तम् । यत्त्वत्र धूमविशिष्टधूमस्य साध्यतायाम्व्यभिचारिरिणि साध्याभावप्रतियोगितावच्छेदकत्वाभावस्य केवलान्वयित्वेनातिव्याप्तिरपि दोष इति तन्न विषयितास्वरूपान्यतरसम्बन्धेन प्रागुक्तान्यतरवद्भावमादाय वारणसम्भवात् । अतएव साध्यवद्वृत्त्यभावीयत्वजगाद्वि-

रूपितवृत्तितानवच्छेदकानुयोगितानिरूपितत्वोभयाभावएव विवक्षणीयः लाघवात् नचाभाव एव साध्यवद्वृत्तित्वजगद्वृत्तिभिन्नत्वोभयाभावो विशेषणमस्त्विति वाच्यमभावस्याधिकरणरूपतापक्षे महानसीयवह्न्यभावादीनामपि गगनाभावरूपत्वादव्याप्तेरन्यथेष्यताम्बा तदेव प्रतियोगिवैयधिकरण्यं चात्र प्रतियोगितावच्छेदकसम्बन्धेनैव वाच्यं स्ववृत्तिवाच्यत्ववत्त्वसम्बन्धेन पटसाध्यकस्थले स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावङ्केवलान्वयिनमादाय लक्षणसङ्गतिरालोचनीया, नच वह्निगगनोभयाभावस्य विषयितया वह्नित्वविशिष्टस्य स्वरूपेणाभावस्य महानसीयवह्निवृत्तित्वविशिष्टजातिमतस्स्वरूपेणाभावस्य स्वरूपेण वह्न्यभावस्य च केवलान्वयितयाऽव्याप्तिरिति वाच्यं तादृशप्रतियोगितावच्छेदकत्वाभावस्य जगन्निरूपितवृत्तितानवच्छेदकानुयोगितानिरूपितप्रतियोगितावच्छेदकत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकस्य विवक्षितत्वादित्यपि निरस्तम्। अत एव साध्यवद्वृत्तित्वसाध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्वोभयाभावो विवक्षणीयः प्रतियोगिव्यधिकरणाभावमात्रस्य प्रमेयरूपसाध्यप्रतियोगिकत्वादव्याप्तेस्साध्यतावच्छेदकावच्छिन्नेति न च प्रमेयवद्वान्वाच्यत्वादित्यत्राव्याप्तिः प्रतियोगिव्यधिकरणाभावीयप्रतियोगितामात्रस्यैव प्रमेयावच्छिन्नत्वादिति वाच्यं। साध्यतावच्छेदकताव्यापकतावच्छेदकताकप्रतियोगिताकत्वस्य विवक्षितत्वादिति अत्र साध्यवद्वृत्त्यभावीयप्रतियोगितानिरूपितसाध्यतावच्छेदताव्यापकावच्छेदकत्वानिरूपितप्रतियोगिताकत्वमस्य पर्यवसितार्थ इत्यपिहेयम्। केचिदत्र गुरुधर्म्मस्य प्रतियोगितावच्छेदकत्वे साध्यतावच्छेदकावच्छिन्नत्वयत्किञ्चिद्धेत्वधिकरणनिरूपितसम्बन्धितावच्छेदकावच्छिन्नत्वोभयाभाव एव प्रतियोगिताविशेषणत्वेनोपादेयो लाघवात् वृत्त्यनियामकसम्बन्धसाध्यकव्यभिचारिण्यपि सम्बन्धान्तरावच्छिन्नसाध्याभावप्रतियोगितायां व्यभिचारनिरूपकाधिकरणनिरूपितसम्बन्धितावच्छेदकावच्छिन्नत्वविरहेणोभयाभावसत्त्वान्नातिव्याप्तिः नच धूमवान्वह्नेरित्यत्र धूमत्वावच्छिन्नसंयोगेन साध्यतायामतिव्याप्तिः अयोगोलकनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धेरिति वाच्यं साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छि-



न्नोभयाभावस्य सम्बन्धिताविशेषणत्वात् नचैवमपि वह्नेर्विषयितया साध्यतायां वह्निविषयकवह्निविशिष्टविषयकवह्नित्वविशिष्टविषयकज्ञानान्यतरत्वेऽतिव्याप्तिः वह्नित्वस्य हेत्वधिकरणमात्रनिरूपितसम्बन्धितावच्छेदकत्वादिति वाच्यन्तादृशसम्बन्धितावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वस्य विवक्षितत्वात् वैशिष्ट्यञ्च स्वसाजात्यस्वसामानाधिकरण्योभयसम्बन्धेनेति वदन्ति तदसत् महानसीयवह्निमान्धूमादित्यत्रातिव्याप्तेः वह्नित्वस्य प्रतियोगितावच्छेदकस्य निखिलहेत्वधिकरणानिरूपितसम्बन्धितावच्छेदकत्वात् सम्बन्धितावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वनिवेशे पर्वतनिरूपितसम्बन्धितावच्छेदकातिरिक्तावच्छिन्नमहानसीयवह्न्यभावप्रतियोगितामादायाव्याप्तितादवस्थ्यापत्तेः नच सम्बन्धिताविशेषणोभयाभावघटकसाध्यतावच्छेदकावच्छिन्नत्वं च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन साध्यताविशिष्टत्वरूपम् वाच्यन्तथा सति महानसीयवह्नित्वावच्छिन्नकालिकसम्बन्धावच्छिन्नपर्वतनिरूपितसम्बन्धिताया उभयाभाववत्त्वेन नाव्याप्तिरितिवाच्यं वह्नेर्विषयतिया साध्यतायां वह्निविषयकमहानासीयवह्निविषयकज्ञानान्यतरत्वेऽतिव्याप्तेः साध्याभावप्रतियोगिताया महानसीयवह्नित्वावच्छिन्नोभयाभाववत्तत्सम्बन्धितावच्छेदकातिरिक्तानवच्छिन्नत्वात् महानसीयधूमत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नसम्बन्धितामादाय धूमवान्वह्नेरित्यत्राप्यतिव्याप्तेः तन्महानसीयवह्न्यभावमादायाव्याप्तितादवस्थ्याच्च प्रतियोगितायान्तन्महानसासमानकालिकयत्किञ्चिद्धेत्वधिकरणनिरूपितसम्बन्धितावच्छेदकावच्छिन्नत्वविरहादिति इदम्पुनरिहावधेयम् विभिन्नकालीनयोरपि परम्परासम्बन्धस्वीकारेणाव्याप्तिर्न सम्भवति प्रागुक्तातिव्याप्तिवारणाय स्वानवच्छेदकानवच्छिन्नत्वैतत्सम्बन्धावच्छिन्नस्ववृत्तित्वोभयसम्बन्धेन तादृशसम्बन्धिताविशिष्टत्वमेव वाच्यं प्रतियोगिवैयधिकण्यञ्च प्रतियोगितावच्छदकसम्बन्धेनैवात्र वाच्यं तथा च सम्बन्धांधर्मिकोभयाभावोवक्ष्यमाणोनादरणीयः गुरुधर्म्मस्य प्रतियोगितानवच्छेदकत्वेऽपि साध्यतावच्छेदकावच्छिन्नत्वस्य पर्य्याप्तिघटितत्वाभावेन न दोषः साध्यतावच्छेदकानिष्ठावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वानिवेशे प्रयोजनाभावेन विषयितया साध्यताव-

च्छेदकाविशिष्टाभावप्रतियोगितायां तत्प्रसिद्धेश्च यत्तु साध्यताव-च्छेदकावच्छिन्नत्वञ्च साध्याधिकरणयत्किञ्चिन्निरूपितसाध्यताव-च्छदेकसम्बन्धावच्छिन्नसम्बन्धितावच्छेदकावच्छिन्नत्वरूपं विवक्ष-णीयं यत्किञ्चित्वनिबेशात्तादात्म्येन प्रमेयसाध्यके नाव्याप्तिरिति तत्र घटवान्नित्यज्ञानत्वादित्यत्राव्याप्तिर्दुरुद्धरा साध्यतावच्छेदक-तदितरोभयानवच्छिन्नत्वकल्पे च प्रतियोगिताधर्मिकोभयाभावघ-टितकल्पानुसरणे न दोष इति वेदितव्यम् यद्यपि साध्यता-वच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपनिरूपितस्वाव-च्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धावच्छिन्न-वृत्तित्वाभावोक्तरूपनिरूपितस्वरूपसम्बन्धवच्छिन्नवृत्तित्वाभावोभया-भाववत्त्वम्प्रतियोगिताविशेषणमेकत्वादेः पर्याप्त्यनभ्युपगमे न प्र-तिविहितन्तथापि पुनः प्रतिविधीयते वह्नेराधेयत्वपर्याप्त्यन्यतरसं-बन्धेन साध्यतायां वह्नित्वत्वेऽव्याप्तेः वह्नित्वगतैकत्वाभावस्य प्रति-योगिवैयधिकरण्यासम्भवात् नच प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यं वाच्यं समवायसम्बन्धावच्छिन्नवह्न्यभाव-मादायाव्याप्तेः यत्त्वेकत्वसाध्यकवाच्यत्वे साध्यतावच्छदकगतै-कत्वाभावमादायाव्याप्तिरिति तन्न। स्वरूपेण तादृशरूपावृत्तिप्रति-योगितावच्छेदकत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभाववि-वक्षायान्दोषाभावादिति ॥ * ॥ यत्त्वत्र प्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धातिरिक्तस-म्बन्धावच्छिन्नत्वोभयाभावानिवेशे समवायसम्बन्धावच्छिन्नवह्न्यभा-वमादाय न दोषः नच वृत्त्यनियामकसम्बन्धसाध्यकव्यभिचारि-ण्यतिव्याप्तिः वृत्त्यनियामकस्य प्रतियोगितानवच्छेदकत्वादिति वाच्यं साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वयत्कि-ञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसम्ब-न्धितावच्छेदकावच्छिन्नत्वोभयाभावस्य विवक्षितत्वात् नचैवम-पि साध्यतावच्छेदकावच्छिन्नप्रतियोगिकवृत्त्यनियामकसम्बन्धसा-ध्यकव्यभिचारिण्यतिव्याप्तिवारणाय साध्यतावच्छेदकावच्छिन्न-त्वसाध्यत्वावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वोभयाभाव-स्य सम्बन्धितायां निवेशनीयतया वृत्त्यनियामकसम्बन्धसाध्य-कसद्धेतावव्याप्तिः प्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदक-



स्याप्युक्तसम्बन्धितावच्छेदकत्वादिति वाच्यं साध्यतावच्छेदकता-व्यापकावच्छेदकताकत्वघटितत्रितयाभावस्य प्रतियोगिताविशेष-णत्वे दोषाभावादिति वदन्ति तेऽनाकलयन्तो लाघवगौरवा-दिकम्पूर्वपक्षरासिका इति ध्येयम् ॥ अथ साध्यतावच्छेदकाव-च्छिन्नाधिकरणत्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वोभयाभा-व एव हेत्वधिकरणे वक्ष्यमाणप्रतियोग्यनधिकरणत्वशब्देन विवक्ष-णीयः प्रतियोगितावच्छेदकावच्छिन्नत्वं च न पर्य्याप्तिघटितन्तथा च महानसीयवह्न्यभावप्रतियोगितावच्छेदकवह्नित्वावच्छिन्नाधिकरणत्व-स्य हेत्वधिकरणमात्रे सत्त्वान्नाव्याप्तिः प्रतियोगितावच्छेदकनिष्ठनि-रूपकतावच्छेदकतावच्छेदकतायां साध्यतावच्छेदकतानिरुपितसंस-र्गतावच्छेदकधर्मावच्छिन्नसंसर्गतानिरूपितत्वमेव वाच्यन्तथा सति विषयितया रूपत्ववदभावमादायापि नाव्याप्तिः संसर्गतावच्छेदक-पर्य्याप्त्यनिवेशाद्वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टसाध्यके नाव्याप्तिः महानसीयवह्निमान्तज्ज्ञानत्वादित्यत्र वक्ष्यमाणरीत्या वारणीयस्य महानसीयाभाववह्न्यभावावादायाव्याप्तिप्रसङ्गस्य नाव-काशः प्रतियोगितावच्छेदकमहानसीयत्वाद्यवच्छिन्नमहानसीयवह्नि त्वावच्छिन्ननिरूपकताकाधिकरणत्वस्य हेत्वधिकरणे सत्त्वात् प्रति-योगितावच्छेदकावच्छिन्नत्वस्य स्वव्यापकत्वसम्बन्धेन प्रतियोगिताव-च्छदकतावृत्त्यवच्छेदकताकत्वार्थकत्वे वह्निमान्तज्ज्ञानत्वादित्यत्र वह्नित्वविशिष्टाभावं वह्नित्वविशिष्टसाध्यकतज्ज्ञानत्वे वह्न्यभावं चादा-यापि नाव्याप्त्यवकाश इति चेदत्यन्ताभावस्य त्रितयप्रतियोगिकत्व-मते गोत्ववान् कालत्वादित्यत्र लक्षणघटकत्वेन सम्प्रतिपन्नस्य सृष्टि-कालवृत्तित्वविशिष्टघटत्वाद्यभावस्य प्रतियोगिवैयधिकरण्यासम्भवे नाव्याप्तिरतः प्रतियोगितायामेवोभयाभावनिवेशो युक्तः नचोक्ताव्या-प्त्यभावाघटितकल्पेऽसम्भवेन तत्र तन्निवेशो नोचित इति वाच्यं तद्विशेषणस्याभावघटितकल्पाभिप्रायकत्वे ग्रन्थसामञ्जस्यादिति ए-तेन स्वावच्छिन्नत्वस्वेतरावच्छिन्नत्वोभयसम्बन्धेन धर्म्मविशिष्टा-न्यत्वस्य महानसीयवह्न्यादिसाध्यकव्यभिचारिण्यतिप्रसङ्गापादक-त्वेऽपि साध्यवद्वृत्त्यभावीयत्वधर्म्मविशिष्टत्वोभयाभावस्य निवेशे न कोऽपि दोषः वैशिष्ट्यं च स्वावच्छिन्नत्वस्वेतरावच्छिन्नत्वोभय-सम्बन्धेनेत्यपि निरस्तम् सृष्टिकालवृत्तित्वविशिष्टघटत्वाभावप्रतियो-

गित्वस्य साध्यवद्वृत्यभावीयत्वधर्म्मविशिष्टत्वयोस्सत्त्वेन गोत्ववान्का-
लत्वादित्यत्राव्याप्तेरिति, अत्र च कालोघटवान्महाकालत्वादित्यत्रा-
व्याप्तेर्वारणाय प्रतियोगितावच्छेदकसाध्यतावच्छेदकान्यतरसम्बन्धा-
वच्छिन्नत्वस्य प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वविशेषणत्वे
निरुक्तोभयाभावात्मकप्रतियोगिवैयधिकरण्यघटितलक्षणविवक्षायां
न कोपि दोषः नच स्ववृत्तिभेदीयमहाकालत्वावच्छिन्नप्रतियोगिता-
सम्बन्धेन घटसाध्यकमहाकालत्वे सद्धेतौ का गतिरिति वाच्यं
घटानुयोगिककालिकप्रतियोगित्वादिसम्बन्धावच्छिन्नप्रतियोगिताक-
महाकालाभावमादाय लक्षणसम्भवात् यदि बिशेषरूपेण न संसर्ग-
त्वादिः प्रतियोगित्वादीनाम्वृत्त्यनियामकतया न प्रतियोगितावच्छेद-
कत्वमित्युच्यते तदा त्वयापि सम्बन्धधर्म्मिकप्रतियोगिताधर्म्मिको-
भयाभावघटितकल्पोऽनुसरणीयस्तत्रैवोक्तरीत्यनुसरणे विफलमेव प्र-
तिभात्युभयानवच्छिन्नत्वादिकमिति चिन्त्यम् परन्त्वत्र न पश्यामो
दूषणवेलेशमपि दीधितिव्याख्याकर्त्तुर्जगदीशस्य यदुक्तरीत्यनुसरणे
तद्ग्रन्थविरोधस्य भवति पुरःप्राप्तिः नापि दीधितिकारस्य मार्ग-
मात्रपदर्शकत्वात्तस्य प्रतियोगितातवच्छेदकत्वघटकावच्छेदकतायाः
पर्य्याप्तिविवक्षायान्तत्तात्पर्य्यस्य वक्तुं शक्यत्वात् जगदीशेन चैक-
त्वादेः पर्य्याप्त्यनभ्युपगमे शिष्यबुद्धिवैशद्याय कथञ्चिदुभयानवच्छि-
न्नत्वसरणे दर्शिततयाऽतिसूक्ष्मापराधान्वेषणेऽपि नापराध्यति सोप्या-
शयविदामिति मन्तव्यम् परे तु रूपत्ववदभावमादाय दोषासम्भवा-
दवच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वन्न नि-
वेशनीयमिति यदुक्तं तन्न युक्तं स्ववृत्तिवाच्यत्ववत्त्वसमवायोभय-
सम्बन्धेन वह्नित्वविशिष्टसाध्यकसद्धेतौ प्रतियोगिव्यधिकरणाभावा-
प्रसिद्ध्या संसर्गतावच्छेदकपर्य्याप्तेर्निवेशनीयतया वह्नित्वप्रतियो-
गिकसमवायेन वह्नित्वविशिष्टसाध्यकेऽव्याप्त्या परिष्कृतस्य तस्या-
वश्यंनिवेशनीयत्वात् एवं च तदनिवेशप्रयुक्तलाघवन्दूरापेतं सामा-
न्यधर्म्मावच्छिन्नाधिकरणत्वास्वीकारे साध्यतावच्छेदकवृत्यभावीय-
प्रतियोगितानिरूपितपरम्परावच्छेदकत्वस्यैव साध्यतावच्छेदकाव-
च्छिन्नाधिकरणतारूपत्वं वाच्य मभावश्च स्वाश्रयवन्निष्ठाधिकरणतान-
वच्छेदकत्वाधिकरणतावच्छेदकत्वोभयाभावरूपस्तथा च क प्रति-
योगिताविशेषणोभयाभावापेक्षया लाघवम् एवमेकत्वादेः पर्य्याप्त्य-



नभ्युपगमपक्ष एवोक्तविशेषणस्यादरणीयतया स्वसाजात्यस्वसामाना-
धिकण्यस्वावच्छेदकसम्बन्धावच्छिन्नत्वैतन्नितयसम्बन्धेन वैशिष्ट्यघ-
टितस्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वतत्स-
म्बन्धावच्छिन्नस्ववृत्तित्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वैतत्रितयस-
म्बन्धेन साध्यताविशिष्टनिरुपकताकाधिकरणत्वस्यैव साध्यतावच्छे-
दकावच्छिन्नाधिकरणतात्मकत्वम्वक्तव्यन्तथा सति किं लाघवम्
नचोक्तसम्बन्धैःप्रतियोगिताविशिष्टनिरुपकताकाधिकरणत्वस्य प्रति-
योगिवैयधिकरण्यघटकत्वम्भवत्कल्पेऽपि वक्ष्यमाणमेवेति वाच्यमति-
गुरुभूतव्यापकत्वसम्बन्धेन प्रतियोगितावच्छेदकतावृत्यवच्छेदकता
कनिरुपकताकाधिकणपरत्वस्याधिकस्य गौरवसम्पादकस्य युष्मत्पक्षे
प्रवेशादित्याहुः तदपि केवलसाध्यतावच्छेदकतदितरोभयानवच्छिन्न-
त्वमात्रनिवेशमालम्ब्य परिचिन्तितम्वोध्यम् तत्पक्षे स्थितानां दोषा-
न्तरवारकविशेषणानामनुसन्धानेऽत्रैव लाघवम्प्रतिभाति ॥ केचित्तु
नित्यज्ञानामुयोगिकत्वविशिष्टमहानसीयवह्नित्वावच्छिन्नप्रतियोगिक-
त्वाभाववद्विषयितासंबन्धेन घटसाध्यकनित्यज्ञानत्वे प्रतियोगिव्यधि-
करणतादृशाभावत्वेनाभिमतमहानसीयवह्न्यभावप्रतियोगितावच्छे-
दकवह्नित्वावच्छिन्नाधिकरणत्वस्य साध्याऽधिकरणे सत्वेनाऽव्याप्तिरि-
ति वदन्ति तन्नातिरमणीयमुक्तरूपेण संसर्गताया इदानीमनभ्युपग-
मात् अन्यथोक्तसम्बन्धेन वह्नेस्साध्यतायान्नित्यज्ञानत्वे महानसीय-
वह्न्यभावप्रतियोगितायामुभयाभावविरहेणाव्याप्तिर्दुरुद्धरा स्यादिति।
अथ बिशेषरूपेणसंसर्गताभ्युपगमस्यापि दृष्टत्वेन तत्पक्षेऽनुपदोक्त-
स्थले सिद्धान्ते का गतिरिति चेद्दीधितिकारोक्तव्यधिकरणधर्म्मा-
वच्छिन्नाभावखण्डनाभासग्रन्थस्थप्रतियोगितावच्छेदकतापर्य्याप्ति-
निवेशो एव गदाधरपरिगृहीतस्तद्वारणायालमादरणीयः एतेनोक्तो-
भयाभावस्य प्रतियोगिताविशेषणस्यैकत्वादेः पर्य्याप्त्यभ्युपगमान-
भ्युपगमोभयपक्षनिर्दुष्टतया पर्य्याप्तिघटितकल्पानुसरणङ्गदाधरभट्टा-
चार्य्याणामनुचितमित्यपास्तम् साध्यतावच्छेदकतदितरोभयानव-
च्छिन्नत्वनिवेशनञ्च शिष्यबुद्धिवैशद्याय,नचैकत्वादेः पर्य्याप्त्यनभ्युप-
गमेन यदवच्छेदकत्वविचाररूपग्रन्थे एकत्वादेः पर्य्याप्त्यनभ्युपगमे
त्वादेस्त्युक्तन्तस्याभासग्रन्थत्वेन न मतनिर्णायणत्वमितिगृहाणेति-
विच् इदन्तु चिन्त्यते यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेद-

कताकत्वसाध्याधिकरणयत्किञ्चिद्व्यक्तिनिरुपितसाध्यतावच्छेदकस-
म्बन्धावच्छिन्नसम्बन्धितावच्छेदकताविशिष्टान्यावच्छेदकतावत्त्वो-
भयाभाववत्त्वमेव प्रतियोगिताविशेषणं वक्तव्यम् वैशिष्ट्यञ्च प्रागुक्त-
त्रितयसम्बन्धेन तादृशावच्छेदकतावत्ता च निरूपितत्वसम्बन्धेन
तथा च वह्निमान्धूमादित्यादौ न महानसीयवह्न्यभावमादायाव्याप्तिः
नवा वह्नित्वविशिष्टसाध्यकतज्ज्ञानत्वे वह्न्यभावं वह्निसाध्यकतज्ज्ञान-
त्वे च वह्निमदभावमादायाव्याप्तिः नापि च विषयितया रूपत्ववद-
भावमादायायेतितत्तद्दोषवारकविशेषणानि नोपादेयानि यद्वोक्तदो-
षाणां वारणाय यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेदकताव-
त्त्वसाध्यतावच्छेदकताविशिष्टान्यावच्छेदकताकत्वोभयाभाव एवोपा-
देयः वैशिष्ट्यञ्च प्रागुक्तत्रितयसम्बन्धेन अत्रोभयत्र व्यापकत्वप्रवेशः
प्रमेयवद्वान्वाच्यत्वादित्यत्र तथाविधाभावीयतादृशप्रतियोगिताप्रसि-
ध्यर्थः अवच्छेदकताकत्वम्विहायावच्छेदकतावत्त्वोपादानाद्विषयितया
रूपत्ववदभावीयप्रतियोगितायामवच्छेदकताद्वयनिरूपितत्वविरहेऽपि
न क्षतिः यत्किञ्चित्वनिवेशाच्च महानसीयवह्निघटोभयाभावीयप्रतियो-
गितानिरूपितवह्नित्वनिष्ठावच्छेदकतादेस्साध्यतावच्छेदकता व्यापक-
त्वविरहेऽपि महानसीयवह्निसाध्यकसद्धेतौ नाव्याप्तिरिति ॥ अथ
महानसीयवह्निमान्तज्ज्ञानत्वादित्यत्र महानसीयाभाववह्न्यभावप्रतियो-
गित्वयोस्साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वेनाव्याप्तिः के-
चिदत्र साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयो-
नवच्छेदकयत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकताप्रतियो
गिकपर्य्याप्त्यनुयोगितावच्छेदकरूपावृत्तित्वं प्रतियोगितायाम्विशेष-
णान्तरम्प्रवेश्यन्तथाच वह्नित्वगतैकत्वमहानसीयत्वगतैकत्वयोरुक्त-
महानसीयवह्नित्वावच्छिन्नवृत्तितावच्छेदकताप्रतियोगिकपर्य्याप्त्यनु-
योगितावच्छेदकत्वान्नाव्याप्तिः नच यत्किञ्चित्वन्न निवेशनीयमि-
ति वाच्यम् तादात्म्येन प्रमेयविशिष्टस्य साध्यतायाम्वाच्यत्वघ-
टत्वगतैकत्वादीनान्तादृशानवच्छेदकत्वावच्छेदकत्वोभयवत्त्वेन घटा-
द्यभावानांलक्षणाघटकत्वात् द्वित्वस्य तादात्म्यसम्बन्धावच्छि-
न्नवृत्तितावच्छेदकत्वविरहेपि तदवच्छिन्नाभावप्रतियोगित्वे निरु-
क्तोभयानवच्छिन्नत्वस्य तदवच्छेदकतायाम्वावक्ष्यमाणसाध्यताव-
च्छेदकेतरानवच्छिन्नत्वस्यासत्त्वेन तदभावानां च लक्षणाघटक-



त्वादव्याप्तेः एवं च धूमाभावीयप्रतियोगितायामयोगोलकनिरू-
पितवृत्तितावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकरूपा-
वृत्तित्वसत्त्वेन धूमवान् वह्नेरित्यत्रातिव्याप्तिविरहेपि वह्निमान्वह्नि-
विषयकमहानसीवह्निविषयकज्ञानान्यतरत्वेऽतिव्याप्तिः स्यादिति
तादृशानवच्छेदकत्वविशेषणमिति समादधति ते च तादृशप्र-
तियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वं सा-
ध्यतावच्छेदकगतरूपे न निवेशनीयमित्यकारणकृतप्रतिज्ञा इति
जानीमहे किञ्चात्र प्रमेयवतस्तादात्म्येन साध्यतायाम्वाच्यत्वे हे-
त्वधिकरणनिरूपितप्रमेयावच्छिन्नवृत्तितावच्छेदकताप्रतियोगिकप-
र्य्याप्त्यनुयोगितावच्छेदकत्वस्यैव तत्तद्धर्म्मवृत्तित्वविशिष्टावच्छेद-
कतावच्छिन्नप्रतियोगित्वमादाय सर्वेष्वेकत्वेषु सत्त्वादवच्छेदक-
भेदेनावच्छेदकताभेदे तु सुतरामेवेत्यव्याप्तिः उक्तयुक्त्या द्वित्वा-
दीनामप्यवच्छेदकत्वेन वह्निमान्धूमादित्यादावपि नच वृत्तिताव-
च्छेदकताविशिष्टप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वम्विव-
क्षणीयम्वैशिष्ट्यञ्च स्वतादात्म्यस्वनिरूपितत्वान्यतरसम्बन्धेन
स्वविशिष्टावच्छेदकतात्वावच्छिन्नत्वसम्बन्धेन तथा च प्रमेयत्व-
सहितप्रमेयगतरूप एवावच्छेदकत्वमिति नाव्याप्तिरिति वाच्यम्
तथापि प्रमेयत्वघटत्वादिगतैकत्ववृत्यन्यतमत्वेनैवावच्छेदकत्वक-
ल्पने दोषोभावेनाव्याप्तितादवस्थ्यात् तच्छुक्लमहानसीयवह्निमान्त-
ज्ज्ञानत्वादित्यत्र तच्छुक्लाभावम्महानसीयवह्न्यभावञ्चादायाव्याप्तेश्च
तत्त्वशुक्लत्वगतद्वित्वादीनान्तादृशावच्छेदकताविशिष्टप्रतियोगिताकप-
र्य्याप्त्यनुयोगितावच्छेदकत्वविरहात् यदि चोक्तवृत्तिताया लाघ-
वेन प्रमेयत्वरूपप्रमेयस्यैवावच्छेदकत्वङ्कल्पनीयमिति प्रमेयवत्सा-
ध्यकेऽव्याप्तिविरहेण वृत्तितावच्छेदकताविशिष्टप्रतियोगिता न
निवेशनीया एवञ्च विषयितया वह्नित्वविशिष्टसाध्यके वह्न्यभाव-
मादाय नाव्याप्तिरपीति विभाव्यते तदापि हेत्वधिकरणपर्वतादिनि-
रूपिताया घटत्वदिकालीनवह्नित्वावच्छिन्नवृत्तितायास्स्ववृत्तिवाच्य-
त्ववत्त्वादिसम्बन्धेन घटत्वाद्यवच्छिन्नवृत्तितायाश्चावच्छेदकत्वस्यै-
व घटत्वादिषु सत्त्वेन वह्निमान्धूमादित्यादौ लक्षणासम्भवः वृत्तिता-
यास्साक्षान्निरूपितत्वस्यावच्छेदकतायां साध्यतावच्छेदकताघटक-
सम्बन्धावच्छिन्नत्वस्य च प्रवेशेपि स्ववृत्तिवाच्यत्ववत्तासम्बन्धेन-

वह्नित्वविशिष्टसाध्यकधूमेऽव्याप्तिः प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नवृत्तितावच्छेदकत्वविवक्षायाञ्च वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टनिरूपितविषयितया साध्यतायां तज्ज्ञानत्वे हेत्वधिकरणनिरूपितवृत्तितानिरूपितप्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वाप्रसिद्ध्याऽव्याप्तिः यदि च प्रतियोतावच्छेकताघटकसम्बन्धावच्छिन्नत्वम् न्यूनवारकमात्रमेव विवक्षणीयमुक्तस्थले समवायेन घटत्वविशिष्टाभावमादाय न दोषइत्युच्यते तदापि समवायसम्बन्धावच्छिन्नावच्छेदकताकविषयितासम्बन्धेन वह्निसाध्यकनित्यज्ञानत्वेऽव्याप्तिः शुद्धसमवायेन विशिष्टसमवायेन वा धर्म्ममात्रविशिष्टाभावस्य प्रतियोगिवैयधिकरण्यविरहात्स्वरूपादिना किञ्चिद्धर्म्मविशिष्टाभावस्य प्रतियोगिवैयधिकरण्येऽपि तत्प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकस्य साध्यतावच्छेदेकसम्बन्धावच्छिन्नहेत्वधिकरणनिरुपितवृत्तित्वस्याप्रसिद्धेः यत्तु वह्निमान्तज्ज्ञानत्वादित्यत्र तादृशानवच्छेदकत्वविशिष्टतादृशावच्छेदकत्ववद्रूपाप्रसिध्याऽव्याप्तिरिति तन्न स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितानवच्छेदकत्वस्वकालीनयत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन साध्यत्वाभाववद्रूपवृत्तित्वस्य विवक्षितत्वात् यद्युक्तविषयित्वादीनां संसर्गत्व मिदानीं न स्वीकरणीयम् । केवलविषयित्वादीनां तदङ्गीक्रियते चेद्भवतामनुशासनन्नदोक्तप्रकारस्यापि सदोषत्वङ्कोनाम ब्रूयादित्युपरम्यते ॥ * ॥ येतु यत्किञ्चित्साध्यतावच्छेदकत्वावृत्तियत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वम्वाच्यम् वृत्तिता च स्वनिरूपितप्रतियोगितावच्छेदकतावत्त्वसम्बन्धेन अवच्छेदकतावत्ता च स्वसाजात्यस्वसामानाधिकरण्योभयसम्बन्धेन वैशिष्ट्यञ्च स्वसाजात्यस्वसामानधिकरण्यस्वावच्छेदकसम्बन्धावच्छिन्नत्वैतत्रितयसम्बन्धेन तथा च महानसीयाभाववह्न्यभावावादाय नाव्याप्तिः उक्तोभयसम्बन्धेन वृत्तित्वोपादाने तार्णवह्निसाध्यकव्यभिचारिणि प्रतियोगितावच्छदेकतायाः प्रत्येकं यत्किञ्चित्साध्यतावच्छेदकत्वावृत्तित्वेनातिव्याप्तिस्स्यादिति तदुपेक्षितम् सामानाधिकरण्यमात्रोक्तौ प्रमेयवत्साध्यकेऽवच्छेदकतामात्रस्य साध्यतावच्छेदकतायां वृत्तित्वेनाव्याप्तिरतस्साजात्यप्रवेशः निरवच्छिन्नसाध्यतावच्छेदकताद्वयस्थले प्रत्येकधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावमादायाव्याप्तेर्वारणाय स्वसामानाधिकरण्येति वैशिष्ट्यघटकस्वसाजात्योपादानात् प्रमेयावच्छिन्नवृत्तितामादाय न दोषः यदि च पर्वतादिनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तितानिरूपितप्रमेयत्वावच्छिन्नाप्यवच्छेदकतावह्नित्वादिष्वेवेत्युरीक्रियते तदा तत्फलं मृग्यम् घटत्वप्रतियोगिकसमवायसम्बन्धावच्छिन्नघटत्यनिष्ठावच्छेदकतायाम्पर्वतादिनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तितावच्छेदकताघटकसम्बन्धन्यावच्छिन्नत्वविरहेण तन्निरूपकप्रतियोगितामादाय लक्षण सङ्गतौ विशेषरूपेण संर्गत्वास्वीकार एव सामानाधिकरण्यनिवेशे शरणम्बोध्यम् । स्वावच्छेदकसम्बन्धावच्छिन्नत्वन्तु स्ववृत्तिवाच्यत्वादिसम्बन्धावच्छिन्नवृत्तितावच्छेदकतामादायातिव्याप्तिवारणायोपादेयमेवेति वदन्ति तेऽपि शुद्धपटत्वावच्छिन्नाप्रतियोगिकालिकसंयोगान्यतरसम्बन्धेन घटसाध्यकमहाकालत्वे पटाभाभावमात्रस्यैव लक्षणघटकतया तत्प्रतियोगितायां हेत्वाधिकरणनिरूपितशुक्लपटत्वावच्छिन्नवृत्तितावच्छेदकताविशिष्टयत्किञ्चित्साध्यतावच्छेदकत्वावृत्त्यच्छेदकतानिरूपितत्वस्य सत्त्वेनाव्याप्त्यापत्तेरेव निरस्ता वेदितव्या यद्युक्तदोषवारणाय हेत्वधिकरणानिरूपितवृत्तितायामेव यत्किञ्चित्त्वम्विशेषणन्तदा मठत्वाद्यवच्छिन्नवृत्तितामादायोक्ताभावस्य लक्षणघटकत्वसम्भवेऽपि महानसीयवह्नेर्विलक्षणविषयितया स्वविशिष्टमुख्यविशेष्यताद्वयशून्यज्ञानीयविषयतावच्छेदकावच्छिन्ननिरूपितविषयितया साध्यतायाम्वह्निविषयकज्ञानमहानसीयविषयकज्ञानान्यतरत्वहेतौ बह्निविषयकज्ञानात्मकहेत्वधिकरणनिरूपितयत्किञ्चित्वृत्तितावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वस्य महानसीयाभावप्रतियोगितायां वह्न्यभावप्रतियोगितायां च महानसीयविषयकज्ञानात्मकहेत्वधिकरणनिरूपितयत्किञ्चित्वृत्तितावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वस्य सत्त्वेन तत्प्रतियोगित्वे आदायाव्याप्तिञ्च विदन्ति तत्समुचितम्वालानामिति ॥ परेत्वत्र तादृशप्रतियोगिताविशिष्टान्यत्वयत्साध्यत्वन्तदवच्छेदकावच्छिन्नसामानाधिकरण्यम्वाच्यम्वैशिष्ट्यञ्च स्वानवच्छेदकानवच्छिन्नत्वस्वसामा-

नाधिकरण्योभयसम्बन्धेन तथा च महानसीयवह्निमान्तज्ज्ञानत्वादि-
त्यत्र नाव्याप्तिरितिति वदन्ति ते च स्ववृत्तित्वघटितसम्बन्धेन वैशि-
ष्ट्याभिधाने महानसीयवह्न्यभावस्यापि वारणसम्भवेन साध्यताव-
च्छेदकतदितरोभयानवच्छिन्नत्वविशेषणवैफल्यप्रशक्तेः तदनभिधाने-
न परिहारः स्वसाजात्यस्वमानाधिकरण्यस्वावच्छेदकसम्बन्धाव-
च्छिन्नत्वैतत्त्रितयसम्बन्धेन स्वनिरूपितावच्छेदकताविशिष्टान्याव-
च्छेदकत्वानिरूपितत्वस्य वैशिष्ट्यघटकत्वाभ्युपगमे महानसीयवह्नि-
वृत्तित्वविशिष्टजातिमदभावस्य विषयितया रूपत्ववदभावस्य च वा-
रणसम्भवान्निरवाच्छिन्नत्वसाध्यतावच्छेकताघटकसम्बन्धावाच्छिन्न-
त्वयोर्न्निरर्थकतान्तदनुक्त्या वारयन्तो जगदीशव्याख्यायामनुग्रहकारि-
ण इति मन्यामहे अथोक्तविशेषणानामत्रैव तात्पर्य्यमिति चेत् साध्य-
तावच्छेदके तादृशप्रतियोगितानवच्छेदकत्वघटितत्वानुपपत्तिः प्र-
योजनवशादिष्यत एवेति चेत्प्रकृतानुमितेः पूर्व्वं प्रकृतानुमितिवि-
धेयतायाःप्रायसोऽनुपस्थितत्वेन तद्घटितव्याप्तेर्दुर्ग्रहतयाऽनुमितेरनु-
पपत्तिः व्याप्तिघटकतया वह्नित्वानुपस्थितावप्यनुमित्यापत्तिः महान-
सीयवह्निमान्तज्ज्ञानत्वादित्यत्र वह्निमहानसीयाभावमादाय भवद्भिर-
पि दोषत्वेनाधितो व्याप्तिर्दोषोऽत्रालोचनीयइति ॥ अत्र ब्रूमः
सर्व्वेषान्निरवच्छिन्नत्वसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्व-
साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वादीनां यत्किञ्चित्साध्यता-
वच्छेदकताव्यापकावच्छेदकताकत्वसाध्यतावच्छेदकतात्वसामाना-
धिकरणभेदप्रतियोगितावच्छेदकत्वोभयाभाववत्त्व एव तात्पर्य्यं
प्रतियोगितावच्छेदकता च स्वनिरूपितावच्छेदकतावत्त्वस्वनिरू-
पितावच्छेदकतात्वव्यापकत्वोभयसम्बन्धेन व्यापकता च स्वनिरूपि-
तसाध्यतानिरूपितावच्छेदतावत्त्वसम्बन्धेन अवच्छेदकतावत्ता
चोभयत्र प्रसिद्धचतुष्टयेषु यावदादेयन्तावद्भिः तथा च महान-
सीयवह्निसाध्यकस्थले प्रत्येकाभावमादाय न दोषः सम्बन्धफलन्तु-
पूर्व्ववदेवबोध्यम् यद्वा यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेद-
कताकत्वसाध्यताविशिष्टान्यत्वोभयाभाव एव तात्पर्य्यमुक्तविषेशण-
नामालोचनीयम् वैशिष्ट्यञ्च स्वनिरूपितावच्छेदकताविशिष्टान्या-
वच्छेदकत्वानिरूपितत्वस्ववृत्तित्वोभयसम्बन्धेन वृत्तित्वञ्च स्वनिरूपि-
तावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसम्बन्धेन वैशिष्ट्य-



ञ्च प्रागुक्तत्रितयसम्बन्धेन एवंच महानसीयवह्निसाध्यकस्थले प्रत्येका-
भावम्विषयितया वह्नित्वविशिष्टसाध्यके वह्न्यभावञ्चादाय नाव्याप्ति-
रिति नचास्यापि साध्यताघटितत्वेन दनुपस्थितिकालीनानुमित्यनुपप-
त्तिर्दोष उक्तोभयाभाववत्प्रतियोगितावच्छेदकत्वीयस्वरूपसम्बन्धाव-
च्छिन्नतादृशप्रतियोगितावच्छेदकत्वाभावस्याव्याप्तिघटकत्वाङ्गीकारे-
णानुपस्थितस्यापि संसर्गतया भानसम्भवेन व्याप्तिग्रहसंभवात् नन्व-
त्रापि महानसीयवह्निमान्तज्ज्ञानत्वादित्यत्र वह्निमहानसीयाभावमा-
दायाव्याप्तिरिति चेन्न स्वावच्छेद्यविशेष्यताविशिष्टविशेष्यतावच्छे-
द्याभावप्रमीयप्रकारतावच्छेदकत्वस्य वैशिष्ट्यघटकताङ्गीकारात् वै-
शिष्ट्यञ्च स्वावच्छेदकीभूतधर्म्मावच्छिन्नत्वस्ववृतिनिरवच्छिन्नत्व-
वत्त्वान्यतरसम्बन्धेन तथा च साध्यत्वावच्छेद्यविशेष्यत्वस्य वह्नि-
त्वावच्छेद्यत्वात्प्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकविशे-
ष्यत्वस्य च महानसीयत्वावच्छिन्नत्वान्नाव्याप्तिरिति ॥ इदञ्च महा-
नसीयवह्नित्वावच्छिन्नप्रतियोगित्ववह्निमहानसीयत्वावच्छेद्यप्रतियोगि-
त्वयोस्स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपभेदा-
द्भेदपक्षे नच द्वित्वयोस्तयोः कथंभेदइति वाच्यं प्रतियोगित्वभेदा-
न्यथानुपपत्याकल्प्यत्वात् नच भेदकाभावः महानसीयधर्म्मिकव-
ह्नित्वज्ञानोत्तरापेक्षाबुद्धिरेकस्य हि सामग्र्यपरस्य हि वह्नित्वावच्छि-
न्नधर्म्मिकमहानसीयत्वज्ञानोत्तरापेक्षाबुद्धिरिति भेदककल्पनात् व-
स्तुतस्संयोगसम्बन्धावच्छिन्नमहानसीयवह्न्यभावप्रतियोगितावच्छे-
दकत्वस्य लाघवेन महानसीयत्ववह्नित्वयोस्सिद्धावपि विषयित्व-
सम्बन्धावच्छिन्नमहानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वं सा-
मानाधिकरण्यसम्बन्धेन महानसीयत्वविशिष्टवह्नित्व एव कल्पनीयमे-
वम्वह्निमहानसीयाभावप्रतियोगितावच्छेकत्वम्महानसीयत्व एव
वह्नित्वविशिष्ट इति पक्षेचोक्तसम्बन्धो न निवेश्यः स्वनिरूपितावच्छे-
दकताविशिष्टान्यत्वघटकसम्बन्धस्य स्वानवच्छेदकानवच्छिन्नत्वरूप-
तोक्तावेवोक्ताभाववारणात् विषयितासम्बन्धेन महानसीयवह्निवि-
धयेतावच्छेदकतापि महानसीयत्वविशिष्टवह्नित्व एव नातोविष-
यितया महानसीयवह्निसाधकेव्यभिचारिण्यतिव्याप्तिः एवञ्च यथा-
श्रुतेऽपि नोक्तसद्धेतावव्याप्तिशङ्कापि प्रतियोगितावच्छेदकसाध्यता-
वच्छेदकयोर्भेदादिति बोध्यम् यद्वा महानसीयवह्न्यभावप्रतियो-

गितावच्छेदकत्वं साक्षादेव महानसीयत्ववह्नित्वयोरङ्गीकार्यं महानसीयत्वस्य च वह्नित्वावच्छिन्नानुयोगिकसमवायेनैव तथात्वमेवम्वह्निमहानसीयाभावप्रतियोगितावच्छेदकत्वम्महानसीयत्वावच्छिन्नानुयोगिताकसमवायेनैव वह्नित्वस्य प्रतियोगितयोर्भेदाय कल्पनीयमिति कल्पेऽपि विशेष्यत्वघटितसम्बन्धो न निवेश्यः स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्य पर्य्याप्तिघटितस्य निवेशेनैव प्रागुक्तदोषवारणादिति ॥ अथ संय्योगादिसम्बन्धावच्छिन्नमहानसीयवह्न्यभावप्रतियोगित्ववह्निमहानसीयाभावीयसय्योंगसम्बन्धावच्छिन्नप्रतियोगित्वयोर्भेदाभावेऽपि क्षत्यभावेन भेदककल्पनाया अन्याय्यत्वेन वृत्यनियामकसम्वधस्य प्रतियोगितानवच्छेदकत्वपक्षे विषयितया महानसीयवह्नेस्साध्यतायां महानसीयवह्निविषयकवह्निमहानसीयविषयकज्ञानान्यतरत्वे व्यभिचारिण्यतिव्याप्तिः साध्याभावस्य प्रतियोगिवैयधिकरण्यविरहादिति चेन्न समनियतनानाधर्म्मावच्छिन्नप्रतियोगित्वानाम्भेदपक्षे दोषाभावात्पक्षान्तरे च साध्यतावच्छेदकावच्छिन्नाधिकरणत्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वोभयाभावस्यैव प्रतियोगिवैयधिकण्यपदार्थत्वात् साध्यतावच्छेदकावच्छिन्नाधिकरणत्वञ्च साध्यताविशिष्टनिरूपकताकाधिकरणत्वम्वैशिष्ट्यञ्च प्रागुक्तसाध्यताविशिष्टान्यत्वघटकवैशिष्ट्यनियामकसम्बन्धे ग्राह्यमिति एवंचाव्याप्तिवारणाय कोपि प्रयासो न विधय इति ॥ यत्तु नीलान्यघटपीतान्यपटोभयसाध्यकपीतघटनीलपटोभयहेतौ पीतान्यघटनीलान्यपटोभयाभावमादायाव्याप्तिरिति तदपि निरस्तं प्रतियोगितावच्छेदकोभयत्वस्य साध्यतावच्छेदकोऽभयत्वादन्यत्वात् न चोभयत्वस्य प्रतियोगितावच्छेदकत्वं न स्वीकरणीयं प्रयोजनाभावादिति वाच्यं प्रतियोग्यंशे उभयत्वभानम्विना तादृशाभावप्रतीतेरनुदयात्प्रमेयत्वम्विना प्रतियोग्यंशेघटत्वादिभानस्य घटोनास्ती तिप्रतीतौ दृष्टत्वेन प्रमेयघटोनास्तीतिप्रतीतिसिद्धाभावप्रतियोगितावच्छेदकत्वस्य प्रमेयत्वे त्यक्तुं युक्तत्वादिति दिक् ॥ ० ॥ ० ॥ साध्यतावच्छेदकभिन्नो य इति साध्यतावच्छेदकताविशिष्टान्यसाध्यतावच्छेदकसमानाधिकरणवृत्त्यवच्छेदकत्वानिरूपितत्वन्तत्पर्य्यवसितार्थः तेन प्रमेयसाध्यतावच्छेदकस्थले साध्यतावच्छेदकेतराप्रसिद्धावपि न क्षतिः अनवच्छेदकत्वानुशार-



णवैयर्थ्यस्येष्टत्वाभ्युपगमादव्याप्तेर्व्वलवत्वाच्चाह अपिचेति यत्त्वत्र साध्यतावच्छेदकताघटकसम्बन्धेन साध्यवृत्तित्वोक्तौ घटत्वस्य स्वरूपेणावृत्तित्वान्न दोष इति तत्तुच्छम् वह्नित्वप्रतियोगिकसमवायेन वह्नित्वस्य साध्यतावच्छेकयत्वे तादृशधर्म्माप्रसिद्धेः नच साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य पर्य्याप्तिघटितस्यानुपादेयत्वेन नाप्रसिद्धिः एवमुक्तपर्य्यवसितार्थे निरवच्छिन्नसाध्यतावच्छेदकस्थले सावच्छिन्नसाध्यतावच्छेदकनिष्ठावच्छेदकतैव तादृशी परत्रच विपरीतेति वाच्यं तादात्म्यस्वरूपान्यतरसम्वधेन प्रमेयत्वविशिष्टसाधकेऽव्याप्तेस्तथाप्यनुद्धारात् अवच्छेदकताधर्म्मिकसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वपरिष्कारे तद्वह्न्यभावस्यापि वारणासम्भवाच्च ॥ ० ॥ ननु साध्यतावच्छेदकातिरिक्तधर्म्मे गगनत्वातिरिक्तत्वमस्तु विशेषणं तथा च गगनाभाव एव तादृशप्रतियोगिताकस्तादृशोभविष्यति प्रमेयवान्वाच्यत्वादित्यादौ नच प्रमेयवान्गगनत्वादित्यत्राव्याप्तिस्साध्यतावच्छेदकतादात्म्येन गगनाभावस्य प्रतियोगिसमानाधिकरणत्वादिति वाच्यमवृत्तिवृत्तिधर्म्मातिरिक्तत्वस्य विशेषणतया विवक्षितत्वेनात्माद्यभावस्य तत्र तादृशत्वसम्भवादात्मगगनान्यतरसाध्यके प्रत्येकाभावमादायाव्याप्तिरनवच्छेदकानुशरणेन वारणीया यदि चात्मसाध्यकज्ञाने सद्धेतौ तदात्मभेदमादायाव्याप्तिः तद्व्यक्तित्वस्यावृत्तिवृत्तित्वात् महानसीयात्मगतद्वित्वविशिष्टवह्न्यभावमादायाव्याप्तिस्तु न सम्भवति अवृत्तिमात्रवृत्तित्वस्य विवक्षितत्वादित्युच्यते तदा साध्यतावच्छेदकातिरिक्तसाध्यवृत्तिधर्म्मनिष्ठा या गगनत्वनिष्ठावच्छेदकताभिन्नासती महाकालत्वनिष्ठावच्छेदकताभिन्नावच्छेदकता तदनिरूपितत्वमेवविवक्षणीयं नचैवमपि द्वित्वत्वेन द्वित्वविशिष्टवह्निसाध्याके सद्धतौ वह्निगगनोभयाभावमादायाव्याप्तिः घटमहाकालयोर्य्यस्संयोगस्तद्व्यक्तिमतस्तादात्म्येन साध्यतायां घटत्वेचाव्याप्तिः तद्व्यक्तिमन्महाकालभेदस्य तादृशप्रतियोगिताकत्वात् नच तदवच्छेदकम्महाकालत्वमात्रमुक्तभेदस्याव्याप्यवृत्तित्वादिति वाच्यं साध्यतावच्छेदकातिरिक्तधर्म्मावच्छेद्यत्वगगनत्वातिरिक्तमहाकालत्वातिरिक्तधर्म्मावच्छेद्यत्वोभयाभावस्य विवक्षितत्वात् एतेन गुरुधर्म्मस्य प्रतियोगितावच्छेदकत्वे प्रमेयगगनाभावमादाय प्रमेयवान्वाच्यत्वादि-

स्यत्राव्याप्तिरित्यप्यपास्तम् यत्तु तत्क्षणविशिष्टकालिकविशेषण-
तया गगनत्वविशिष्टसाध्यकतत्कालत्वे गगनत्ववन्महाकालाभाव-
मादायाव्याप्तिरिति तत्तुच्छं निरुक्तधर्म्मावच्छेद्यत्वगगनत्वातिरिक्त-
धर्म्मावच्छेद्यत्वमहाकालत्वातिरिक्तधर्म्मावच्छेद्यत्वैतत्रितयाभावस्य-
विवक्षितत्वादेवञ्च विषयितया प्रमेयस्य साध्यतायां प्रमेयविषय-
कगगनादिविषयकज्ञानत्वेऽपि नाव्याप्तिः गगनाद्यभावस्य प्रतियोगि-
वैयधिकरण्यविरहेऽपि घटाद्यभावस्यैव तादृशप्रतियोगिताकस्य सं-
भवान्नच महानसीयवह्न्यभावप्रतियोगित्वस्य धर्म्मत्रयानवच्छिन्नत्वा-
दव्याप्तितादवस्थ्यमिति वाच्यम् अवच्छेद्यत्वसम्बन्धेन तादृशधर्म्म-
वद्घटितत्रितयाद्यभावस्य विवक्षितत्वात् स्ववृत्तिभेदीयघटत्वावच्छि-
न्नप्रतियोगितासम्बन्धेन प्रमेयसाध्यकघटत्वे घटाभावमात्रस्य प्रति-
योगिव्यधिकरणाभावस्य तादृशप्रतियोगिताकत्वेपि स्ववृत्तिभेदीय-
नीलघटत्वावच्छिन्नप्रतियोगितासम्बन्धेन साध्यतायान्तत्राव्याप्तिरि-
ति तु न साधुः उक्तभेदानुयोगितानवच्छेदकधर्म्मविशिष्टस्याप्यु-
क्तभेदघटितसम्बन्धेन व्यापकत्वाङ्गीकारे स्ववृत्तिभेदीयमहानसीय-
वह्नित्वावच्छिन्नप्रतियोगितासम्बन्धेन वह्निसाध्यकमहानसीयवह्नि-
त्वे सद्धेतौ महानसीयवह्न्यभावमात्रस्य लक्षणघटकतया तत्प्रतियो-
गितायामुक्तोभयानवच्छिन्नत्वविरहेणाव्याप्तेर्दुरुद्धरत्वादिति चेन्न घ-
टवन्नित्यज्ञानत्वादित्यत्र नित्यज्ञानान्यत्वविशिष्टपटाद्यभावस्यैव ल-
क्षणघटकतायाः सम्भावितत्वेन तदीयप्रतियोगितायामुक्तत्रितयाभा-
वविरहादव्याप्तेरनिवार्य्यत्वादिति ॥ ० ॥ अथ साध्यवृत्तित्वं सा-
ध्यतावच्छेदकवृत्तित्वरूपस्वाच्यस्वृत्तिता च स्वसामानाधिकरण्य-
साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नाभावप्रतियोगित्वविशिष्ट-
स्वाभाववद्वृत्तित्वाभाववत्त्वसम्बन्धावच्छिन्नस्वाभाववत्त्वोभयसम्ब-
न्धेन तथाच प्रमेयसाध्यकस्थले वाच्यत्वादिरेव तादृशो धर्म्मः स्वा-
भावस्याप्रसिद्धत्वात् प्रमेयत्व उक्तप्रतियोगित्वविरहेण तद्विशिष्टोक्त-
वृत्तित्वाभाववत्त्वसम्बन्धेन घटत्वस्यैव सत्त्वेन स्वाभाववत्त्वघटित
सम्बन्धेन घटत्वादीनाम्वृत्तित्वविरहादिति न तादृशाभावाप्रसिद्धि-
रितिचेन्मैवम्पूर्व्वकल्पापेक्षयागुरुत्वात् गुरुधर्म्मस्य प्रतियोगिताव-
च्छेदकत्वे प्रमेयघटाभावमादायाव्याप्तितादवस्थ्यात् प्रमेयत्वस्यापि
विशिष्टाभावादिप्रतियोगित्वेन धर्म्ममात्रस्य तद्वृत्तित्वात्प्रमेयसाध्यका-



व्याप्तितादवस्थ्याच्च कथञ्चित्प्रमेयत्वे प्रतियोगित्ववारणसम्भवेऽपि
घटान्यप्रमेयसाध्यकभूतलत्वादौ घटाभावस्य प्रतियोगिवैयधिकर-
ण्यविरहादभावान्तरस्य तादृशप्रतियोगिताकत्वविरहादव्याप्तेश्चेति
॥ ० ॥ अथ साध्यतावच्छेदकातिरिक्तधर्म्मव्यासज्ज्यवृत्त्यन्यत्व-
म्विशेषणं देयम्प्रमेसाध्यके घटादिगतद्वित्वावच्छिन्नाभावमादायैव ल-
क्षणसङ्गतिः नच वह्निघटोभयाभावमादायाव्याप्तिर्व्यासज्यवृत्त्यन्य-
साध्यताच्छेदकातिरिक्तघटत्वस्य साध्यवृत्तित्वविरहादिति वाच्य-
मिदानीं साध्यवृत्तित्वनिवेशप्रयोजनाभावात्सर्व्वत्रैव सद्धेतौ द्वित्वा-
दिमात्रावच्छिन्नाभावमादाय लक्षणसमन्वयात् नच रूपवान्घ
टत्वादित्यत्र रूपद्वयन्नास्तीतिप्रतीतिसिद्धाभावमादयाव्याप्तिः रू-
पत्वद्वित्वयोरेवावच्छेदकत्वेन तत्प्रतियोगितायामुक्तानवच्छिन्नत्व-
सत्त्वादितिवाच्यं साध्यतावच्छेदकातिरिक्तधर्म्मावच्छेद्यत्वव्या-
सज्यवृत्तिधर्म्मातिरिक्तधर्म्मावच्छेद्यत्वोभयाभावस्य प्रतियोगि-
ताविशेषणत्वात् इति चेन्न द्वित्वविशिष्टस्य साध्यतायां यत्र
घटगतगुणएकस्मिन्द्वयोर्व्वा द्वित्वमुत्पन्नं न त्रिषु तद्घटनिष्ठतद्व्य-
क्तित्वे सद्धेतौ द्वित्वत्रयन्नास्तीत्यभावमादायाव्याप्तेः व्यासज्यवृत्ति-
धर्म्मातिरिक्तधर्मावच्छेद्यत्वस्य प्रतियोगितायाम्विरहात् विषयितया
प्रमेयस्य साध्यतायान्नित्यज्ञानत्वे नित्यज्ञानान्यत्वविशिष्टघटाभाव-
मात्रस्य लक्षणघटकतया तत्प्रतियोगितायामुभयाभावविरहेणाव्या-
प्तेश्चेति ॥ ० ॥ काश्चिदेतस्य ग्रन्थोक्तविशेषणस्य तादात्म्येन जाति-
मत्साध्यकसत्त्वे घटाद्यभावं सद्घटाभावञ्चादायाव्याप्तिवारणाय
साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितान-
वच्छेदकसाध्यवृत्तिवृत्तिरुपावृत्तित्वार्थकतामाह तन्नैकत्वादेः पर्य्या-
प्त्यनभ्युपगम एवोक्तकल्पादरणात् एतद्दोषसदृशस्य दण्ड्यादिसा-
ध्यकस्थलाव्याप्तेर्ग्रन्थकृतैव वक्ष्यमाणत्वात्प्राक्परिष्कृते तत्कल्पे दो-
षासम्भवाच्च अभावस्याप्रसिद्धेरिति यद्यपि तादृशधर्म्मानव-
च्छिन्नप्रतियोगित्वाप्रसिद्धिरेवदातुमुचिता तथापि संयोगादिसम्ब-
न्धावच्छिन्नप्रमेयाभावप्रतियोगित्वस्य विषयितया प्रमेयत्ववदभावी-
यप्रतियोगित्वस्य ध्वंसीयप्रतियोगित्वस्य तादृशस्य प्रसिद्धेरभावा-
त्प्रसिद्धिपर्य्यन्तानुधावनं तथा च साध्यतावच्छेदकसम्बन्धेन प्रति-
योगिव्यधिकरणस्य सध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छे-

दकताघटकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकस्य हेतुसमानाधिकरणात्यन्ताभावस्य न प्रसिद्धिरिति ॥ ० ॥ द्रव्यत्वादिरूपेणेत्यादि अत्र तृतीयाया अवच्छिन्नत्वमर्थः धूम इतिसप्तम्यन्तस्य च धूमनिष्ठलिङ्गत्वम्वह्निव्याप्यत्वञ्च वह्निविधेयताकानुमितिजनकतायां विषयितयावच्छेदकीभूतोधर्म्मः तदेकदेशेऽनुमितौ द्रव्यत्वावच्छिन्नधूमनिष्ठलिङ्गकत्वस्यान्वयः धूमत्वावच्छिन्नलिङ्गताकत्वन्धूमसामान्य इति सप्तम्यन्तार्थः तस्य तत्तद्वह्निव्याप्यत्वशब्दार्थीभूततत्तद्वह्निविधेयताकानुमितिजनकतावच्छेदकघटकानुमितावन्वयः उक्तावच्छेदकद्वयोश्चेतरभेदानुमित्युद्देश्यतावच्छेदकाभावसम्पादनरूपप्रकृतवारणशब्दार्थाभाव आधेयतासम्बन्धेनान्वयः चतुर्थ्या इच्छाधीनत्वमर्थः विशिष्येत्यस्य विशिष्टमित्यर्थः क्त्वाप्रत्ययार्थस्याविवक्षितत्वात् विशिष्टता च साध्यतावच्छेदकावच्छिन्नविधेयत्वहेतुतावच्छेदकावच्छिन्नलिङ्गताकत्वघटितत्वं लक्ष्यमितरभेदानुमित्युद्देश्यं निर्द्दिशति बोधयतीत्यर्थः अयमाशयः तद्धर्म्माश्रयनिष्ठलिङ्गताकतद्धर्म्माश्रयनिष्ठविधेयताकानुमितिजनकतावच्छेदकम्पक्षीकृत्य तद्धर्म्मावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदक तद्धर्म्मावच्छिन्नसामानाधिकरण्येन हेतुनेतरभेदसाधने धूमत्वाश्रयनिष्ठलिङ्गतात्वस्य द्रव्यत्वावच्छिन्नलिङ्गतायां वह्नित्वाश्रयनिष्ठविधेयतात्वस्य च तत्तद्वह्नित्वावच्छिन्नविधेयतायां सत्त्वेनोद्देश्यतावच्छेदकस्य द्रव्यत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदके धूमत्वावच्छिन्नलिङ्गताकतद्वह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदके च सत्त्वात् तत्र चोक्तावच्छेकद्वये धूमत्वावच्छिन्नसामानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यविरहाद्भागासिद्धिस्स्याद्विशिष्यलक्ष्यनिर्द्देशेचोद्देश्यतावच्छेदकस्य तत्रासत्त्वेन न भागासिद्ध्यवकाशः अथ द्रव्यत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकस्याप्रसिद्धतया कथं तदन्तर्भावेण भागासिद्धिः धूमवदनुयोगिकसंयोगरूपप्रकृतहेतुतावच्छेदकसम्बन्धावच्छिन्नद्रव्यत्वावच्छिन्नलिङ्गताकतादृशानुमितिजनकतावच्छेदकस्य प्रसिद्धत्वेऽपि तस्योक्तसामानाधिकरण्याभिन्नत्वेन भागासिद्ध्यसम्भव एवेति चेन्न भ्रमप्रमासाधारण्यानुरोधे न हि विषयितासम्बन्धेन व्याप्तिविशिष्टनिश्चयत्वेन कारणत्वम्परित्यज्य निरू-



प्यनिरूपकभावापन्नविषयताकनिश्चयत्वेन कारणत्वम्वाच्यम्विषयाविधियेत्यादिग्रन्थस्त्वापाततो विषयविशिष्टनिश्चयत्वेन कारणत्वपक्षीयः वस्तुतो व्याप्तिरित्यस्योक्तजनकतानतिरिक्तवृत्तिविषयितानिरूपक इत्यर्थः अनतिरिक्तवृत्तित्वञ्च स्वव्यापकतत्कत्वन्तथा च यादृशरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकविषयिताव्यापिकोक्तजनकता तादृशरूपमुक्तजनकतावृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्पर्य्यवसायिपक्षीकृत्योक्तसामानाधिकरण्यत्वगतसामुदायत्वहेतुकानुमाने तादृशजनकत्वपक्षकोक्तसामानाधिकरण्यत्वाववच्छिन्ननिरूपितविषयित्वावच्छिन्नत्वहेतुकानुमाने वा विशिष्य लक्ष्यानिवेशे भागासिद्धौ तात्पर्य्यमिति॥ परे तु व्याप्यत्वस्य व्याप्यत्वव्यहारस्येत्यर्थः लक्ष्यमितरभेदानुमित्युद्देश्यरूपव्याप्यत्वपदार्थम् अयम्भावः तत्तद्धर्म्मावच्छिन्नहेतुसाध्यबोधकपदसमभिव्याहृतव्याप्यत्वपदार्थस्तद्धर्म्मघटित एव तत्र व्याप्यत्वय्यँदि तद्धर्म्माश्रयनिष्ठलिङ्गताकतद्धर्म्माश्रयनिष्ठविधेयताकानुमितिजनकतावच्छदेकरुपन्तदा द्रव्यम्वह्निव्याप्यमितिव्यवहारापत्तिस्स्यात्तत्प्रयोजकस्य द्रव्यत्वाश्रयनिष्ठलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकस्य धूमत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकधूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यरूपविषयस्य सत्त्वाद्विशिष्य लक्ष्यनिर्द्देशे तु द्रव्यत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकरूपविषययस्याप्रसिद्धेर्न्नापत्तिरिति प्राहुः ॥ केचित्तु व्याप्यत्वस्येत्यन्तरमुक्तसामानाधिकरण्यरूपताया इति पूरणीयन्तथाच व्याप्तिरित्येतावदुक्तावविशेषात्तद्धर्म्मावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकतद्धर्म्मावच्छिन्नसामानाधियरण्यस्य तद्धर्म्मावच्छिन्नलिङ्गताकतद्धर्म्मावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकत्वस्येव धर्म्मान्तरावच्छिन्नलिङ्गताकधर्म्मान्तरावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकत्वस्य प्रसङ्गे न तादृशव्याप्तिज्ञानविरहदशायान्तत्तद्धर्म्मावच्छिन्नलिङ्गताकतद्धर्म्मावच्छिन्नविधेयताकानुमित्यनुपपत्तिः तद्रूपविशिष्टेत्यनुक्तौ च धूमत्वावच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्याज्ञाने द्रव्यत्वाव-

च्छिन्नलिङ्गतादिकानुमित्यनुपपत्तिर्दोषः तद्रूपाविशिष्टस्येत्याद्युक्तौचा-
न्यधर्म्मावच्छिन्नलिङ्गतादिकानुमितिजनकतावच्छेदकस्य तद्धर्म्माव-
च्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकतद्धर्म्मावच्छि-
सामानाधिकरण्यरूपताविरहान्न परामर्षानुमित्योः कार्य्यकारणभावे
व्यभिचारसम्भव इति भाव इति वदन्ति ॥०॥ सामान्यरूपतालाभा-
येति वह्नित्वाश्रयनिखिलव्यक्तिगमकताप्रयोजकतालाभायत्यर्थः य-
त्किञ्चिद्व्यक्तिसामानाधिकरण्ये यावत्प्रतियोगिकत्वविरहाद्यावदि-
त्यादेर्य्यथाश्रुतार्थकताव्यवच्छेदाय लक्षणयोक्तार्थवोधकत्वंसूचयितुं'
लाभायेति ॥०॥ निरवच्छिन्नमेवेति किञ्चित्सम्वन्धावच्छिन्नाव-
च्छेदकत्वानिरूपितमेवेत्यर्थः अवच्छेदकतामात्रस्य सम्वन्धावच्छि-
न्नत्वेन निरवच्छिन्नावच्छेदकत्वाप्रसिद्धेस्सम्वन्धावच्छिन्नेति ॥ ननु
विशिष्टसाध्यतावच्छेदकस्थलेऽवच्छेदकतायान्निरवच्छिन्नत्वविवक्षया
पटसमवेतत्वविशिष्टजातिमदभावमादाय यद्यप्यव्याप्तिवारणं स-
म्भवति तथापि दण्डिमान्द्रव्यत्वादित्यत्र दण्डस्य निरवच्छिन्नावच्छे-
दकताविरहेणातिव्याप्तिस्स्यादित्यत आह येन रूपणेत्यादि साध्यता-
वच्छेदनिष्ठावच्छेदकतावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपित-
त्वसाध्यतावच्छेदकतावच्छेदकानिष्ठावच्छेदकतानिरूपितत्वोभयाभा-
घवदित्यर्थः विशिष्टव्यश्च प्राग्वत् एवंच प्रमेयस्य साध्यता-
वच्छेदकतावच्छेदकत्वे तदितराप्रसिद्धावपि न क्षतिः अत्रो-
भयानवच्छिन्नेति सम्पातायातमुक्तविशिष्टान्यावच्छेदकत्वानिरू-
पितत्वमात्रम्विवक्षितं लाघवात्कथमन्यथा जातिमद्वान्घटत्वादि-
त्यत्राव्याप्तिवारणायोक्तविशेषणमुपादीयेत पटसमवेतत्वविशिष्टव-
दभावमादायाव्याप्तेस्तदवस्थानात् कथम्वा तद्व्यक्तिमदभा-
वन्तत्ताविशिष्टदण्डत्वविशिष्टवदभावश्चादाय दण्डिमान्दण्डिसंयो-
गादित्यत्राव्याप्तिसद्भावे तत्राव्याप्त्यभावप्रतिपादकं यदिचेत्या-
दिकमन्यथोच्येत यत्तु वह्नित्वविशिष्टस्य विषयितया साध्यतायान्त-
ज्ज्ञानत्वे सद्धेतौ वह्न्यभावमादायाव्याप्तिरत उभयानवच्छिन्नत्वमेव
विवक्षितन्तथासति तादृशावच्छेदकतायां सावच्छिन्नत्वविशेषणेन
वह्न्यभाववारणञ्च साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नाव-
वच्छेदकतायां सावच्छिन्नत्वम्विवक्षितुं शक्यं वह्नित्वाश्रयवान् धू-
मादित्यत्र प्रतियोगिव्यधिकरणहतुसमानाधिकरणाभावीयप्रतियोगि-



तानिरुपिततादृशावच्छेदकत्वाप्रसिद्धा अव्याप्त्यापत्तेरिति तत्तुच्छ-
मुक्तग्रन्थासङ्गतेर्लाघवाच्चोभयानवच्छिन्नत्वस्याविवक्षणीयत्वात् सा-
ध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वीयस्वरूपसम्बन्धा
वच्छिन्नावच्छेदकत्वाभावे विक्षणीये सम्बन्धघटककावच्छेदकतायां
सावच्छिन्नत्वस्य विशेषणीयतया वह्न्यभावमादायाव्याप्तिवारणासम्भ-
वात् एवञ्च रूपत्वन्यूनवृत्तिजातिपदेन नीलत्वत्वपीतत्वत्वाद्यन्यतमवि-
शिष्टजातिर्ग्राह्या नीलाद्यभावादेर्न्नीलत्वादिमदभावे तात्पर्य्यन्नातस्तदा
दपृष्ठ्यादावित्यादिपदेनेत्यादिग्रन्थविरोधः प्रतियोगितावच्छेदकता-
यां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वकल्पे साध्यतानि-
रूपितावच्छेदकताविशिष्टान्यसंसर्गतानिरूपितत्वसाध्यतावच्छेदक-
ताव्यापकत्वोभयाभावरूपमुक्तावच्छिन्नत्वं वाच्यं तथा च वह्न्य-
भाववारणसंम्भवोग्रन्थासङ्गत्यभावश्चेतिपरमार्थः वशिष्टयञ्च स्वनि-
रूपितसंसर्गतानिरूपितावच्छेदकतावद्धर्म्मावच्छिन्नत्वस्वसमानाधि-
करणसावच्छिन्नावच्छेदकतानिरूपितत्वोभयसम्बन्धेन येतु वह्न्यभा-
वमादायाव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यमेव साध्यतावच्छेद-
कावच्छिन्नाधिकरणत्वप्रतियोगिताश्रयाधिकरणात्वोभयाभावरूपम्वा-
च्यमिति वदन्ति तेऽपि प्रतियोगिताश्रयनिष्ठनिरूपकताकाधिकरण-
त्वप्रवेशे प्रमेयावच्छिन्ननिरूपकतामादाय घटाभावस्यापि प्रतियोगिवै-
यधिकरण्यासम्भवः प्रतियोगित्वावच्छिन्नाधिकरणत्वप्रवेशे वह्निविष-
कज्ञाने तद्विरहेण वह्न्यभावस्यापि प्रतियोगिवैयधिकरण्यसम्भवः
प्रमेयत्वावच्छिन्नावच्छेदकताकनिरुपकतामादाय घटाभावस्य प्रतियो-
गिवैयधिकण्यानुपपत्या प्रतियोगितावच्छेदकानिष्ठावच्छेदकताकनि-
रुपकताकाधिकरणत्वानिवेशोऽपि हेय इति हेया केचित्तु साध्य-
तावच्छेदकतावच्छेदकातिरिक्तानवच्छिन्नावच्छेदकतायान्निरवच्छि-
न्नत्वसाध्यतावच्छेदकताव्यापकत्वोभयाभावरूपसावच्छिन्नत्वनिवेशा-
न्न वह्न्यभावमादायाव्याप्तिसम्भवो नवा वह्नित्वाश्रयवान्धूमादित्य-
त्राव्याप्तिप्रसङ्ग इति प्राहुः ॥०॥ अथात्र विशिष्टसाध्यतावच्छे-
दकस्थले शुद्धसाध्यतावच्छेदकस्थले च स्वानवच्छेदकानवच्छि-
न्नत्वसम्बन्धेन साध्यतावच्छेदकताविशिष्टान्यसाध्यतावच्छेदकनि-
ष्ठावच्छेदकत्वानिरूपितत्वमेव वाच्यं तावतैव महानसीयवृत्तिजा-
तिमदभावस्य पटसमवेतत्वविशिष्टजातिमदभावस्य च वारणसम्भ-

वव्यभिचारतया प्रकृतसाध्यतावच्छेदकसम्बन्धस्यवृत्त्यनियामक-
त्वेनतत्सम्बन्धावच्छिन्न साध्याभावाप्रसिद्ध्यानतत्सम्भवः वृत्त्यनि-
यामकसम्बन्धस्यप्रतियोगितावच्छेदकत्वाङ्गीकारेच जात्युपादाने-
पिविषयितयातत्तद्व्यक्त्यभाववति वह्नित्वेनवह्निविषयकज्ञाने विष-
यितयावह्नित्वावच्छिन्नाभावासत्वेनव्यभिचारोदुरुद्धरस्स्यादितिचेन्न
वृत्त्यनियामकसम्बन्धस्यभेदप्रतियोगितावच्छेदकतायाःसर्वानुमततया
साध्यतावच्छेदकसम्बन्धप्रतियोगित्वविशिष्टहेतुसमानाधिकरणा-
न्योन्याभावप्रतियोगितावच्छेदकत्वाभावाभावस्यैवव्याधिकरणसम्ब-
न्धेनव्यापकत्ववारणाय व्यभिचारस्यसाध्यतावच्छेदकसम्बन्धाति-
रिक्तसम्बन्धावच्छिन्नत्व साध्यताव्यापकत्व साध्यतावच्छेदक-
सम्बन्धावच्छिन्नसम्बन्धितावच्छेदकावच्छिन्नत्वै तत्त्रितयाभावव-
त्तादृशभेदप्रतियोगितावच्छेदकत्वस्यवा तत्वस्यवाच्यतया प्रकृतेपि-
तत्संगतेः । यद्वाव्याप्तिशरीरे यत्सम्बन्धेवृत्त्यनियामकसम्बन्धान्यत्वं
विशेषणीकृत्य वृत्त्यनियामकस्यप्रतियोगितावच्छेदकत्वाभ्युपगमेन
व्यभिचारस्यसंगमनीयत्वम्बोध्यमिति ।

ननुजात्युपादानेपिकपालद्वसंयोगगतकम्बुग्रीवात्वरूपजातेः स्वा-
श्रयाश्रयाधिकरणत्वरूपपरंपरासम्बन्धेन समानाधिकरणीभूतोभया-
वृत्तिधर्मावच्छिन्नाभावकूटवति तत्सम्बन्धावच्छिन्नस्वनिष्ठावच्छेद-
कताकप्रतियोगिताकाभावत्वसम्बन्धेन कम्बुग्रीवात्वस्य विरहेणव्य-
भिचारःगुणविभाजकजातित्वेनप्रवेशेपि स्वव्याप्यकम्बुग्रीवात्वाश्रया-
धिकरणत्वसम्बन्धेन संयोगत्वाधिकरणत्वघटितहेतुमति संयोगत्व-
स्यविरहेणव्यभिचारोदुर्वारएवेतिचेन्न समवायेनैवयज्जात्यधिकरण-
त्वस्यप्रवेशाददोषात् नचजात्युपादानमफलं गुणत्वाविशिष्टस्यापिय-
त्तदादिपदवोध्यतयायत्वतत्वेनोपादानसम्भवेन गुणसमानाधिकरणो-
भयावृत्तिधर्मावच्छिन्नाभावकूटस्य गुणवत्वव्यभिचारित्वात् यादृश-
स्यचव्याप्तिघटकत्वंतादृशावच्छिन्नत्वघटितएवसाध्यत्वस्य साध्यसं-
सगत्वस्यैववा व्याप्त्यनुभवगृहीततया संयोगेनगुणवदभावप्रतियो-
गितावच्छेदकत्वस्य द्रव्यत्वकल्पनेनोक्तसम्बन्धस्य गुणव्याधिकरणत्वा-
देवंजातित्वेनजातेरपियत्वतत्त्वेनग्राह्यतया जात्यवच्छिन्नाभावप्रतियो-
गितावच्छेदकत्वस्य नित्यत्वाविशेषितजातेरेवकल्पनीयतया व्यभि-
चाराच्च नचयेनरूपेणोपादेयतातदवच्छिन्नावच्छेदकत्वस्यैवसाध्य घ-



टकत्वे संयोगत्वादेरपिस्वरूपतोयत्पदानुपादेयतया संयोगत्वत्वेनयत्प-
दोपादेयसंयोगत्वस्य तेनप्रातियोगितानवच्छेदत्वेनव्यभिचारइतितत्प-
दोपस्थाप्यनिष्ठावच्छेदकताकत्वस्यैव साध्यस्यतत्संसर्गस्यवाघटक-
तायावाच्यतया गुणत्वेनजातित्वेनगुणजात्यादेरुपादेयत्वेपिनदोष-
इतिवाच्यम् गुणावच्छिन्नाभावजात्यवच्छिन्नाभावाद्यनुभवे आनुभ-
विकानांगुणत्वजातित्वाद्यवच्छिन्नावच्छेदकत्वावगाहितायाएवानुभ-
वारूढत्वेन तस्यतत्पदोपादेयत्वे जातित्वावच्छिन्नावच्छेदकताकप्रति-
योगिताकाभावस्यैवसाध्यत्वापत्याव्यभिचारस्स्यादेव संयोगत्वाद्यव-
च्छिन्नाभावानुभवेच संयोगत्वनिष्ठावच्छेदकत्वावगाहितायाएवानु-
भविकत्वेन तस्यतत्पदोपादेयत्वे तन्निष्ठाष्ठवच्छेदकत्वघटितस्यसाध्य-
ताया संसर्गतायावा प्राप्तत्वेननदोषइत्येतदर्थस्यानुभववासनावासि-
तान्तःकरणवेद्यस्यसत्वात् । एतदभिप्रायेणैवजात्यवच्छिन्नाभावाप्र-
सिद्ध्याव्यभिचारस्यभट्टाचार्योक्तासंगच्छते नचजात्युदपादानेपिजा-
तित्वेनजातेर्यत्पदोपादेयतयाव्यभिचारतादवस्थ्यमितिवाच्यम् जाति-
पदसमभिव्याहृतयत्पदस्यजातित्वेनजातिबोधकत्वासम्भवा ज्जाति-
विशेषाणाम्बोधस्यैवतथानुभविकत्वात् स्वविशेषान्वितजात्याद्य-
वच्छिन्नाभावानुभवेपि तादृशजातिनिष्ठावच्छेदकताकत्वावगाहित्व-
स्यैवचानुभाविकत्वाच्च अथैवंसिद्धसाधनप्रसंगः सामानाधिकरण्य-
सम्बन्धेनशाखादिदेशकालविशेषावच्छिन्नत्वावच्छिन्नसंयोगत्वनिष्ठा-
वच्छेदकत्वनिरूपकप्रतियोगिताकाभावस्यवृक्षेसत्वादितिचेन्न य-
न्निष्ठयत्सम्बन्धावच्छिन्ननिरवच्छिन्ननिरूपकताकसम्बन्धित्वसमाना-
धिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटवान्यः सतन्निष्ठतत्सम्बन्धा-
वच्छिन्ननिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववानिति व्या-
प्तावेवजात्युपादानकर्त्तुस्तात्पर्यात् यत्सम्बन्धावच्छिन्नाभावस्यहेतु-
घटकत्वंतत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वस्ययद्धर्म-
विशेषणत्वमङ्गीकुर्वतामप्यत्रैवतात्पर्यम्बोध्यमिति ।

उभयावृत्तिपदवैयर्थ्यमिति, वैयर्थ्यमत्रननिष्प्रयोजनकत्वं स्वरूपा-
सिद्धिवारकस्यतदसम्भवात किंतुविशिष्टान्तरतादृशघटितत्वमेवे-
तिबोध्यम् । अथघटसामान्याभावविरहिणिकतिपयघटाभावादिस-
त्वेनव्यभिचारवारणाय यावदित्युक्तन्दीधितिकृता यावत्वंचात्रव्या-
पकत्वार्थकं कूटत्वावच्छिन्नार्थकम्बावाच्यं तत्राद्ये यद्धर्मसमानाधि-

करणोभयावृत्ति धर्मावच्छिन्नप्रतियोगिताकाभावत्वव्यापकत्वंहेतुः
पर्यवसितः व्यापकत्वंच स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन
तत्रकम्बुग्रीवादिमत्वसमानाधिकरणोभयावृत्ति धर्मावच्छिन्नप्रतियो-
गिताकाभाववृत्तिभेदप्रतियोगितावच्छेदकत्वाभावप्रतियोगितावच्छे-
दकत्वस्य लाघवेनघटत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्र-
तियोगिताकाभाववृत्तिभेदप्रतियोगितावच्छेदकतात्वएवकल्पनीयत-
या तादृशाभावस्याप्रसिद्ध्या यत्पदेनकम्बुग्रीवादिमत्वस्योपादाना-
सम्भवा ज्जातिपादोपादानग्रन्थासङ्गतिः वैयर्थ्यपरोक्तग्रन्थासङ्गतिश्च
उभयावृत्तित्वघटिततदघटिताभावयोर्भेदेनविशिष्टान्तरघटितत्वासंभ-
वात् द्वितीयेच तादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगि-
कूटत्वावच्छिन्नस्यहेतुत्वमायात न्तत्रापिवैयर्थ्यासम्भवः उभयावृत्ति-
त्वाघटिततद्धटितधर्मावच्छिन्नानुयोगित्वयोर्भेदेनबिशिष्टान्तरघटित-
त्वासम्भवात् नचस्वव्याप्यत्वसम्बन्धेनतादृशाभावत्ववृत्तित्वंहेतुः
विशिष्टाभावत्वस्याभावत्वानतिरिक्ततयाव्याप्यत्वासम्भवात् तादृशा
भावत्वावच्छिन्नानुयोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्या-
प्त्यनुयोगितावच्छेदकरूपवृत्तित्वमपिनहेतु वैयर्थ्यासम्भवाद्धेतोर्वि-
शिष्टान्तरस्यचविभिन्नानुयोगिताघटितत्वात् नचयद्धर्मसानाधिकर-
ण्यनिष्ठावच्छेदकताभिन्नोभयावृत्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदक-
त्वानिरूपिततत्तदवच्छेदकतानिरूपितधर्मनिष्ठावच्छेदकतानिरूपित-
तद्भिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकताभिन्नाव-
च्छेदकत्वानिरूपिततदवच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेद-
कतानिरूपिताभावत्वनिष्ठावच्छेदकतानिरूपितानुयोगितानिरूपकप-
र्याप्तिप्रतियोगिकूटत्वत्वेनैवतादृशकूटत्वस्यहेतुतावच्छेदकत्वंवाच्यं
तथाचतादृशकूटत्वावच्छिन्नाविषयकोभयावृत्तित्वनिष्ठावच्छेदकत्व-
निरूपितत्वाविषयकतादृशकूटत्वविषयकप्रतीतिविषयतावच्छेदका-
वच्छिन्नघटितत्वेनवैयर्थ्यसम्भवइतिवाच्यम् तथासत्युभयावृत्यनुपा-
दानेपि स्वरूपासिद्ध्यसम्भवात् उभयावृत्तित्वनिष्ठावच्छेदकत्वानु-
पादानस्यैवतदनुपादानपर्यवसायित्वेन तादृशानुयोगिताकपर्याप्तिप्र-
तियोगिकूटत्वत्वस्य सत्ताद्यवच्छिन्नाभावसाधारणकूटत्वोभयावृत्तिध
र्मावच्छिन्नाभावमात्रवृत्तिकूटत्वद्वयसाधारणतया तदेकस्यपक्षेसत्वा-
दितिचे दुच्यते ? यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्न-



प्रतियोगिताकाभावत्वकूटत्वोभयरूपेणैवपरामर्शीयपक्षविशेष्यतानिरू-
पितप्रकारत्वरूपहेतुत्वं यावद्विशेषाभावस्यविवक्षितं तत्रतादृशाभावे-
कूटत्वस्य स्वोद्देश्यतावच्छेदकव्यापकपर्याप्तिरेवसंसर्गः संसर्गताच-
नतादृशपर्याप्तित्वेन किन्तुपर्याप्तित्वेनैववह्नित्वाद्यवच्छिन्नप्रतियोगित्व-
स्यप्रतियोगितात्वेनसंसर्गतावत् एवञ्चतादृशपर्याप्तित्वबिशिष्टसंसर्गे-
णविशिष्टान्तरतावच्छेदककूटत्वस्यव्याप्यतानवच्छेदकत्वेपिनक्षतिः
तादृशस्यहेतुतावच्छेदकताघटकसम्बन्धत्वविरहात् यथाचशुद्धप्रति-
योगितात्वेनप्रतियोगित्वस्यतादृशसंसर्गत्वेपिवह्निविशिष्टोऽभावोनम-
हानसीयवह्न्यभाव स्तथोक्तपर्याप्तेःपर्याप्तित्वेनसंसर्गत्वेपितादृशाभा-
वकूटवत्वंनकतिपयाभाववतीतिनव्यभिचारः तथाचोभयावृत्तित्वानु-
पादानेयद्धर्मसमानाधिकरणधर्मावच्छिन्नाभावकूटस्यहेतुतया तत्रकू-
टत्वस्यतादृशाभावत्वव्यापकपर्याप्तेरेवसंसर्गत्वेनस्वरूपासिद्धिसंगतिः
यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकू-
टत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्धर्मसमानाधिक-
रणधर्मावच्छिन्नप्रतियोगिताकाभावकूटत्वावच्छिन्नविषयकत्वस्यहे-
तुविषयकप्रतीतौसत्वेन वैयर्थ्यसंगतिश्च उक्तकूटत्वयोर्विलक्षणपर्या-
प्तिरूपहेतुतावच्छेदकताघटकसम्बन्धेनहेतौवर्त्तमानत्वावर्त्तमानत्वा-
भ्यांवैलक्षण्येपि कूटत्वत्वेननिखिलकूटत्वस्यैवहेतुतावच्छेदकत्वात्
समवायेनावृत्तेरपिप्रमेयस्यसमवायेनप्रमेयाभावप्रतियोगित्व प्रमेयव-
दभावप्रतियोगितावच्छेदकत्ववत् । ननुहेतुतावच्छेदकतात्वावच्छि-
न्नपर्याप्त्यनुयोगितावच्छेदकरूपेस्वावच्छिन्नानुयोगिताकपर्याप्तिकाव-
च्छेदकताकविषयताकत्वशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्न-
पर्याप्त्यनुयोगितावच्छेदकप्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छि-
न्नप्रतियोगिताकपर्याप्त्यवच्छेदक हेतुतावच्छेदकसमानाधिकरणवृ-
त्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यज्ञा-
नविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानव-
च्छेदकत्वस्यैवव्यर्थविशेषणघटितत्वरूपत्वम्वाच्य मन्यथानीलधूम-
त्वस्यधूमत्वानतिरेकणधूमत्वावच्छिन्नविषयतायानीलधूमत्वावच्छि-
न्नत्वात्तत्रवैयर्थ्यासम्भवात् द्रव्यंघटवृत्तिसत्वादित्यादौपढवृत्तिस-
त्तात्वावच्छिन्नविषयकतादृशविषयताशून्यप्रतीतिविषयतावच्छेदके-
व्याप्यतावच्छेदकविशिष्टसत्तात्वानतिरिक्तेनसत्तात्वेनावच्छिन्नवि-

षयताकत्वस्यैवहेतुप्रतीतौसत्वेनवैयर्थ्यप्रसङ्गाच्च तथाचयद्धर्मसमाना-
धिकरणधर्मावच्छिन्नाभावकूटवानितिप्रतीतिविषयतावच्छेदकतात्वा-
वच्छिन्नपर्याप्त्यनुयोगितावच्छेदकसत्तावदभावादिप्रतियोगित्वसा-
धारणसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविष-
यताशून्यत्वस्यहेतुमत्वप्रतीतौसत्वेननवैयर्थ्यसम्भवइति । यत्तुयद्ध-
र्मसमानाधिकरणत्वमात्रेणवास्तवोभयावृत्तिधर्ममात्रावगाहि यद्धर्म-
समानाधिकरणधर्मावच्छिन्नाभावकूटवानितिप्रतीतिमादायवैयर्थ्यसं-
भवः तत्रसत्तावदभावादेरविषयत्वेनतत्प्रतियोगित्वसाधारणसमुदा-
यत्वस्यधारणासम्भवादिति तन्न तादृशप्रतीतिविषयतावच्छेदकता-
त्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकस्य व्याप्यताव-
च्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्ववि-
रहा त्तस्यसत्वावच्छिन्नप्रतियोगित्वादिसाधारणसमुदायत्वउभयावृ-
त्तित्वसाधारणसमुदायत्वेवासत्वात् । अन्येतुनिरवच्छिन्नावच्छेदक-
त्वस्यैवव्यर्थविशेषणघटितत्वघटकत्वमित्यभ्युपगमेन प्रकृतेउभयावृ-
त्तित्वविशेषणस्यव्यर्थतामुपपादयन्ति तथाहि हेतुतावच्छेदकघटका-
नामवश्यंकुत्राप्यनवस्थाभयेनस्वरूपतोभानमभ्युपेयं तथाचोभयावृत्ति-
त्वघटकस्वरूपतोभासमाननिष्ठावच्छेदकत्वस्यापि निरवच्छिन्नतया
तद्घटितवृत्तिसमुदायत्वस्यैवहेतुतानिरूपितनिरवच्छिन्नावच्छेदकता-
त्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतया तदवच्छि-
न्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यं विशिष्टा-
न्तरघटकस्वरूपतोभानयोग्याखिलप्रकारकसमूहालम्बन ज्ञानमादाय
विषयतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकस्य व्याप्य-
तानिरूपित निरवच्छिन्नावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगिताव-
च्छेदकत्ववत्तया तदवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकता-
कविषयताशून्यत्वस्यहेतुमत्वज्ञानेविरहेण वैयर्थ्यसम्भवइतिवदन्तित
दसत् निरवच्छिन्नावच्छेदकत्वस्यव्यर्थविशेषणघटितत्वघटतकत्वाव-
श्य कत्वएवाहितत्संम्भवति नचतस्यावश्यकत्वन्तथाहि धूमवतोहेतुत्वे-
धूमधूमत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकता-
कविषयताशून्यधूमत्वेनतद्धूमावगाहिधूमवह्निानितिज्ञानविषतावच्छे-
दकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकतद्धूमधूमत्वगताद्वित्व-
मादायवैयर्थ्यवारणाय हेतुतावच्छेदकतायान्निरवच्छिन्नत्वमभिमतंत-



त्रोक्तद्वित्वस्यव्याप्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वविर-
हेण दोषस्यैवाभावाद्धूमवतोव्याप्यत्वेधूमत्वनिखिलधूमगतसमुदायत्वे
तद्धूमवतोव्याप्यत्वंत त्तासहितसमुदायत्वेवातस्यभावान्नतदुपादेयम्
एवंहेतुमत्वविषयकज्ञाने धूमत्वतद्धूमगतद्वित्वावच्छिन्नानुयोगिताक-
पर्याप्तिप्रतियोग्यवच्छेदकत्वकविषयत्वस्यापिनसम्भवः तथाहितादृ-
शपर्याप्तीयाप्रतियोगितानतज्ज्ञानीयविषयतावच्छेदकतात्वावच्छिन्ना
तन्निरुपकपर्याप्त्यनुयोगितावच्छेदकत्वस्यसमुदायत्वएवसत्वा न्ना
प्तितद्धूमातिरिक्तधूमावृत्यवच्छेदकतात्वावच्छिन्ना वच्छेदकभेदेनाव
च्छेदकताभेदस्याप्रामाणिकत्वात् नापितद्धूमधूमत्वान्यतरवृत्तित्ववि-
शिष्टावच्छेदकतात्वावछिन्ना किञ्चिन्निष्ठानिरूपितत्वसम्बन्धावच्छि-
न्नावच्छेदकताभिन्नावच्छेदकतात्वानिष्ठावच्छेदकताभिन्नभेदानिष्ठाव-
च्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वस्यप्रतियोगित्वविशेषणतया-
विवक्षणीयत्वात् अतएवजातिमद्धेतुकस्थलेधूमत्वगतैकत्वंविशिष्टान्त-
रविषयतावच्छेदकतापर्याप्त्यनुयोगितयच्छेदकमादाय वैयर्थ्यवारणा-
यतादृशरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतायान्निर-
वच्छिन्नत्वोपादानमप्ययास्तम् धूमत्वगतकत्वावच्छिन्नानुयोगिताक-
पर्याप्तिप्रतियोग्यवच्छेदकताकाविषयताकत्वाविरहा त्तादृशाविषयताशू-
न्यहेतुविषयकज्ञानाविषयतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगिता-
वच्छेदकत्वस्यहेतुतानिरूपितानिरवच्छिन्नावच्छेदकतापर्याप्त्यनुयो-
गितावच्छेदकेसत्वाच्च एवन्नीलधूमवद्धेतुकेविशिष्टान्तरविषयतावच्छे-
दकगतधूमधूमत्वगतसमुदायत्वस्यस्वावच्छिन्नानुयोगिताकपर्याप्ति-
प्रतियोगिनिरवच्छिन्नावच्छेदकत्वप्रसिद्धे धूमत्वगतैकत्वस्यव्याप्य-
तावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वविरहेणधार-
णासम्भवेपि वैयर्थ्यासम्भववारणाय व्याप्यतावच्छेदकतायान्निरव-
च्छिन्नत्वोपानमपिनकार्यमिचेदुच्यते ? स्वावच्छिन्नाधिकरणताव-
वृत्तित्वसम्बन्धेनधूमत्वविशिष्टद्रव्यहेतुके स्वाश्रयप्रतियोगिकत्वस-
म्बन्धनधूमत्वविशिष्टप्रागभावहेतुकस्थलेच्च विशिष्टान्तरतावच्छेदक-
धूमत्वस्यहेतुतावच्छेदकसमानाधिकरणतया तद्गतैकत्वमादायवैय-
र्थ्यवारणाय हेतुविशेषणवैयर्थ्यस्थलेव्यर्थविशेणघटितत्वशरीरेस-
मानाधिकरणवृत्तित्वस्थानेहेतुत्वावच्छेद्यविशेष्यतावच्छेदकतात्वा-
वच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वंविशेषणंदेय मेवञ्चहेतुतावच्छे-

दकविशेषणस्यनैल्यादेर्नीलधूमवतोहेतुतायांवैयर्थ्यसम्पादनायावच्छे-
दकतावच्छेदकत्वघटितत्वं व्यर्थविशेषणघटितत्वम्बाच्य न्तत्रधूम-
त्वाविशिष्टद्रव्यवतोहेतुतास्थले व्यर्थविशेषणत्वस्यधूमत्वेवारणाय वि-
शिष्टान्तराविषयतावच्छेदकतावच्छेदकतायांहेतुतावच्छेदकत्वावच्छे-
द्यविशेष्यता वच्छेदकतासामानाधिकरण्यं विशेषणतयाविवक्षणीय
न्तथासतिप्रकृतेपिवैयर्थ्यसम्भवः सत्वाद्यवच्छिन्नप्रतियोगित्वादीना-
मुक्तविशेष्यतानवच्छेदकत्वात् व्याप्यतावच्छेदकतावच्छेदकत्वेपि-
तादृशाविशेष्यतावच्छेदकतासामानाधिकरण्यम्बिशेषण मन्यथा-
नीलधूमविशिष्टवह्नेतुकस्थलेधूमत्वगतैकत्वस्यधारणंनस्यादितितुन-
वाच्यं विशिष्टसत्तावतोहेतुत्वेपिवैयर्थ्यंस्या द्वैशिष्ट्यनिष्ठावच्छेदक-
त्वेव्याप्यतावच्छेदकतानिरूपितउक्तसामानाधिकरण्यविरहा त्किन्तु
व्याप्यतावच्छेदकतायांमुक्तविशेष्यताविशिष्टत्वम्बाच्यं वैशिष्ट्य-
ञ्चस्वावच्छेदकधर्मावच्छिन्नत्व स्वनिरूपितप्रकारतासमानाधिकर
णावच्छेदकत्वानिरूपितत्वोभयसम्बन्धेनेत्यलम् ॥ * ॥

केचित्तुयज्जातिसमानाधिकरणोभयावृत्ति धर्मावच्छिन्नप्रतियोगिता-
काभावएबहेतुः हेतुताच विलक्षणविषयितासम्बन्धेनस्वविशिष्टज्ञानवृ-
त्तिकूटत्वावच्छिन्नवत्वसम्बन्धेन वृत्तिताचस्वाभाववदवृत्तित्वसम्ब-
न्धेन अवृत्तित्वघटकवृत्तित्वञ्च स्वविषयतावच्छेदकतापर्याप्त्यधिकर-
णधर्मवत्वसम्बन्धेन तथाच नव्यभिचारोनवाजात्युपादानासङ्गतिः
नापिवैयर्थ्यासङ्गतिश्चेतिप्राहुः । परेतुविलक्षणप्रतियोगितासम्बन्धेन-
स्वविशिष्टाभाववृत्तिकूटत्वावच्छिन्नवत्वसम्बन्धेनतादृशाभावस्यहेतु-
त्वं वृत्तित्वञ्चस्वाभाववदवृत्तित्वसम्बन्धेन अवृत्तित्वघटकवृत्तिताच
स्वप्रतियोगितावच्छेदकधर्मवत्वसम्बन्धेनेति नव्यभिचारोनवैयर्थ्या-
सङ्गतिरितिवदन्ति तन्नातिसमञ्जसं जात्युपादानवैयर्थ्यात् कम्बु-
ग्रीवादिमत्वघटिताभावविशिष्टाभावाप्रसिद्धेर्घटत्वघटिताभावत्वस्यै-
व तदवच्छेदकत्वौचित्यादितिदिक् ॥ ० ॥

व्यभिचारवारकस्येवेति, अत्र साध्यगमकत्वरूपं हेतुत्वं हि किं-
चिद्धर्मिण्येवसाध्यगमकत्वं निर्धर्मिकानुमित्यभावात् तथा च गम-
कतायां साध्यव्याप्तेरिवपक्षधर्मत्वस्यापि प्रयोजकतया वैयर्थ्यशरी-
रेप्रकृतसाध्यव्याप्यतावच्छेदकत्वस्येव प्रकृतपक्षधर्मतावच्छेदकत्व-
स्यापि विशेषणत्वम्बाच्यमिति स्वरूपासिद्धिवारकस्यनवैयर्थ्य-



मितिमिश्राणामाशयः । अन्येषान्तुगमकतायां व्याप्तिमात्रमुपयुक्तं ह्रदे-
धूमस्यवह्निगमकत्वविरहेपिगमकतानहीयते पर्वतेवह्निगमकत्वाक्ष
तेरिति पक्षधर्मतावच्छेदकत्वन्नवैयर्थ्यघटकमिति व्यभिचारावार-
कस्यवैयर्थ्यंस्वदतामाशयो बोध्यः ।

अत एवशब्देनित्यत्वसाध्यकेत्यादि, एकमात्रगुणेतद्घटीयरूपे
व्यभिचारवारणाय विशेषगुणान्तरासमानाधिकरणेति । स्वात्मक-
विशेषगुणसमानाधिकणेशब्देऽसिद्धिवारणायान्तरेति । आकाश-
मनः संयोगेव्यभिचारवारणायैकमात्रवृत्तीति । एकमात्रवृत्तित्वं
चोभयावृत्तित्वं वृत्तिताच तत्र समवायावच्छिन्नान्तर्भवतीतिगग-
नमनस्संयोगध्वंसेव्याभिचारवारणायगुणेति मनः कर्मणिव्यभि-
चारवारणायवा गुणेति । नचमनोवेगेव्यभिचार इति वाच्यम् तस्य-
मीमांसकमतेगतिसन्तानएवान्तर्भावादिति तु ग्रन्थानुरोधिनः विशे-
षगुणान्तरासामानाधिकरण्योक्तिस्वारस्यादेवविशेषगुणसामानाधि-
करण्यस्यापिहेतुघटकत्वलाभाद्गतौनव्यभिचारसम्भवः उक्तध्वं-
सेव्यभिचारवारणायैवगुणत्वोपादानं दृष्टान्तताचनगगनपरिमा-
माणस्यैवेति समयपरिमाणवदिति मूलग्रन्थाननुरोधिनः । ननुश-
ब्देतराविशेषगुणासमानाधिकरणत्वविशेषगुणासमानाधिकरणत्वरू-
पाभावयोर्भेदननवैयर्थ्यसम्भव इति चेन्न ? विलक्षणप्रतियोगितास-
म्बन्धेन स्वविशिष्टाभाववत्वसम्बन्धेन शब्देतरविशेषगुणसामा-
नाधिकरण्यस्यैवविशेषणत्वेतात्पर्यादुपस्थितौलाघवादिति भावः ।
क्वचित्पुस्तकेशब्दो ऽनित्यः सामान्यवत्वेसतिविशेषगुणान्तरास-
मानाधिकरणत्वेसतिवहिरिन्द्रियग्राह्यत्वादित्यनुमानमुपलभ्यते त-
दप्रामाणिकं निःप्रयोजनगुणान्तरासमानाधिकरणत्वविशेषणशून्य-
स्यैतादृशानुमानहेतोर्मूलग्रन्थे ऽदर्शनादिति ।

असिद्धिवारकविशेषणशून्यं कल्पान्तरमाहयद्वेत्यादि, अ-
थकालिकस्ववृत्तिवाच्यत्ववत्वादिसम्बन्धावच्छिन्नसंयोगत्वनिष्ठाव-
च्छेदकताकप्रतियोगित्वादिकमादायस्वरूपासिद्धिवारणाय सम-
वायसम्बन्धावच्छिन्नावच्छेदकत्वसंयोगत्वसत्तात्वान्यतरावच्छिन्न-
प्रतियोगित्वसंयोगद्रव्यत्वाद्युभयाभावप्रतियोगित्वादिकमादायस्व-
रूपासिद्धिवारणाय यद्धर्मातिरिक्तधर्मानवच्छिन्नत्वस्य यद्ध-
र्मावच्छिन्नयावत्प्रतियोगित्वावच्छिन्नाभावस्य संयोगसामान्या-

भावप्रतियोगित्वावच्छिन्नाभावरूपस्य वृक्षे ऽसत्तयास्वरूपासि-
द्धिवारणाय प्रत्येकावच्छिन्नत्वस्यचनिवेशनीयतया ऽसिद्धि-
वारकाणामत्रापिसत्वमेवेति ,चेन्न ? यद्रूपविशिष्टप्रतियोगिताकूटव-
त्वंयत्र तत्रतद्रूपवृत्तिप्रतियोगिताकाभाववत्वमितिसामान्यव्याप्तेर-
भ्युपगमात् वैशिष्ट्यञ्च स्वावच्छिन्नानुयोगिताकपर्याप्तीयायाकिञ्चि-
न्निष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकतात्व-
निष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिता तद्वत्स-
मवायसम्बन्धावच्छिन्नावच्छेदकताकत्वसम्बन्धेन कूटवत्ताचस्वा-
वच्छिन्नप्रतियोगिताकाभाववत्वसम्बन्धेन रूपवृत्तित्वञ्च स्वनि-
रूपितसमवायसम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगि-
ताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनबोध्यम् एवञ्चनासिद्धि-
वारकस्य व्यर्थविशेषणस्यात्रावकाशइति। केचित्तूभयावृत्तित्वाद्यप्र-
वेशेनलघुभूतं व्याख्यान्तरमाह यद्वेति, तेननासिद्धिरित्यादि, अ-
सिद्धिवारकतत्ताद्विशेषणोपादानेननासिद्धिः असिद्धिवारक-
त्वादेवतत्तद्विशेषणानाम्नव्यर्थतेत्यर्थ इति प्राहुः। परेतुयद्धर्मा-
वच्छिन्नप्रतियोगितात्वव्यापकत्वमेव हेतु र्व्यापकताच स्वनिष्ठा-
भावप्रतियोगितावच्छेदकत्वसम्बन्धेन तथाचव्यापकतारूपाभा-
ववैलक्षण्याद्वैयर्थ्यासम्भव इति वदन्ति। अन्येतूभयावृत्तिधर्मा-
वच्छिन्नत्वस्योभयावृत्तिधर्मसत्तात्वान्यतरावच्छिन्नप्रतियोगिताका-
भावं स्ववृत्तिवाच्यत्ववत्तासम्बन्धावच्छिन्नतद्व्यक्तित्वनिष्ठावच्छे-
दकताक-प्रतियोगिताकाभावञ्चादाय स्वरूपासिद्धिवारणाय स्व-
रूपसम्बन्धावच्छिन्नतद्व्यक्तित्वनिष्ठावच्छेदकत्वान्यावच्छेदकत्वानि-
रूपितत्वार्थकत्वमिव यद्धर्मावच्छिन्नत्वस्यापिस्वरूपासिद्धिवारणा-
यसमवायसम्बन्धावच्छिन्नयद्धर्मनिष्ठावच्छेदकत्वान्यावच्छेदकत्वा-
निरूपितत्वार्थकत्वमस्तु भयावृत्तित्वस्याप्रवेशेनतदनुपादानेनब-
न्धनासिद्धिर्न तस्याप्रवेशादेवचनव्यर्थविशेषणतेत्यालपन्ति। अव-
च्छिन्नत्वस्यातिरिक्तानवच्छिन्नत्वरूपस्य भेदघटितत्वेनावच्छिन्नत्व-
सापेक्षतया दुर्निरूपत्वेनविलक्षणस्यैववाच्यतया समवायसम्बन्धा-
वच्छिन्नावच्छेदकताकप्रतियोगितानिष्ठमितरानवच्छिन्नप्रतियोगिता-
निष्ठमिवविलक्षणमेवाङ्गीकार्यमित्यसिद्धिवारकविशेषणस्याप्रवेशेन
तदनुपादानप्रयुक्तासिद्धिर्न यतोनासिद्धिरतोनव्यर्थविशेषणत्वमि-



त्यर्थः नचप्रत्येकपदस्यासिद्धिवारकस्यप्रवेश इति वाच्यम् स्वाव-
च्छिन्नप्रतियोगिताकाभाववत्वसम्बन्धेनतादृशप्रतियोगिताकूटएवहे-
तुरित्यस्यैववक्तव्यत्वा दन्यादृशस्यप्रत्येकावच्छिन्नाभावस्यतुर्घ-
टत्वादिति। अतएवयावत्वस्यव्यापकत्वार्थकत्वोपगमनसंसर्गको-
टावुभयावृत्तित्वादेर्निवेशेनचपूर्वकाविलेपविवैयर्थ्यपरीहारसम्भवा द्व-
य्यर्थविशेषणत्वसम्पत्यैकल्पान्तरस्यानुसृतस्य यावत्वाद्व्यापकत्वा-
र्थकत्वोपगमादिनातत्फलकत्वसंपादनं सन्दर्भविरुद्धमित्यपिनिरस्त-
मितितुवयं ब्रूमः॥

अथयोयदीययावद्विशेषाभाववानित्यस्य-योयदीयानां यदभाव-
प्रतियोगित्वानां यावतां विशेषाभाववान्प्रत्येकधर्मावच्छिन्नाभाव-
वानिति सतत्सामान्याभाववानित्यस्य च सतदात्मकसामान्याभा-
ववानित्यर्थएव कुतोनाङ्गीकृतः असिद्धिवारकविशेषणस्यासम्भवा-
लाघवाच्चेतित्वत्रचिन्त्यं। ध्येयमिति, सामान्याभावप्रतियोगि-
त्वस्यप्रतियोगितावच्छेदकरूपताया अतिरिक्ततायावा सिद्धान्त-
सिद्धतयासान्दिग्धासिद्धेर्दुर्वारत्वप्रसङ्गरूपास्वरसंसूचयितुमुक्तम्।

विशेषपदस्यन्यूनवृत्तिधर्मवदर्थकतामभ्युपेत्यव्याख्यानन्दूषयि-
तुमाहयोयद्धर्मन्यूनवृत्तीत्यादि, न्यूनवृत्तित्वंच स्वसमानाधिकरण-
त्वेसतिस्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं सत्तात्वस्य-
न्यूनवृत्तित्ववारणाय-स्वसमानाधिकरणेति ननुन्यूनवृत्तिधर्मेपक्ष-
तावच्छेदकाविशिष्टान्यत्वम्वाच्यम् वैशिष्ट्यं च स्वाश्रयवृत्तित्व-
स्वानाश्रयवृत्तिवृत्तित्वोभयसम्बन्धेन तथाचघटावृत्तिसंयोगत्वस्य
वृक्षपटादिसंयोगद्वयवृत्तित्वा द्वृक्षसमवेतत्वस्यचवृक्षतादितिरोभय-
वृत्तिसत्तावृत्तित्वान्नपक्षतावच्छेदकविशिष्टान्यत्वमित्यत आह वृक्षा-
न्यासमवेतत्वेति, नचवृक्षान्यासमवेतत्वस्यवृक्षत्ववृक्षरूपादावेवस-
त्वेननसंयोगत्वसामानाधिकरण्यमितिवाच्यम् वृक्षद्वयसंयोगान्तर्भा-
वेणतत्सत्वा त्तस्यवृक्षान्यासमवेतत्वात्। अथपक्षतावच्छेदकवि-
शिष्टान्यत्वस्यवृक्षसंयोगनिष्ठतत्तद्व्यक्तित्वेपिनसम्भवः तस्यवृक्षान्य-
कप्यादिवृत्तिवृत्तितया नचवृक्षद्वयसंयोगनिष्ठतद्व्यक्तित्वएवतत्सम्भव
इति वाच्यम् तद्वृक्षत्वस्यपक्षतावच्छेदकत्वउक्ततद्व्यक्तित्वेपिपक्षताव-
च्छेदकविशिष्टान्यत्वासम्भवादितिचे द्वैशिष्ट्यस्यस्वाविशिष्टवृत्तिवृ-
त्तित्वघटितेनाविवक्षितत्वात् वैशिष्ट्यञ्चस्वानाश्रयत्वस्वानाश्रयवृत्ति-

गुणानाश्रयत्वोभयसम्बन्धेन तथाचकप्यादेः स्वानाश्रयत्वेपि स्वा-
श्रयवृत्तिसंयोगरूपगुणानाश्रयत्वविरहेणवृक्षसंयोगनिष्ठतद्यक्तित्वेवि-
शिष्टान्यत्वसम्भवादिति। यद्वापक्षसमवेतविशिष्टान्यत्वमेवविशेष-
णं वैशिष्ट्यञ्चस्ववृत्तित्वस्वानाश्रयवृत्तिवृत्तित्वोभयसम्बन्धेन त-
थाचनकोपिदोषः। वस्तुतस्तुन्यूनवृत्तित्वस्यैवयद्धर्मसमानाधिक-
रणत्वेसातियद्धर्माश्रयाविशिष्टान्यत्वार्थकत्वं स्वीकृत्य योयद्धर्मन्यू-
नवृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववान् सतद्धर्मावच्छि-
न्नाभाववानित्येवं व्याप्तिरेववाच्या वैशिष्ट्यञ्चानुपदोक्तोभयसम्ब-
न्धेन एवञ्चसामान्यव्याप्तिग्रहाद्व्याप्यसामान्याघटकपक्षतावच्छेद-
कविशिष्टान्यत्वादिघटित विशेषहेतुकानुमित्यसम्भवेपि नक्षतिरिति-
एवं वृक्षपदस्य तत्संयोगवदर्थकतयातत्संयोगवदन्यासमवेतत्वेप-
क्षसमवेतरूपादिविशिष्टत्वसत्वेपि संयोगत्वाश्रयविशिष्टान्यत्वस-
त्वेनतत्सङ्ग्रहः तत्तद्वृक्षत्वं पक्षतावच्छेदकीकृत्योक्तहेतुनासंयोगसा-
मान्याभावसाधनेप्रागुक्तेववक्ष्यमाणेपिचवृक्षान्यासमवेतत्वमादायदो-
षासम्भवात् वृक्षपदस्य तत्तत्संयोगवदर्थकतायाअभ्युपेयत्वादिति
त्वभिनपन्थाः। केचित्तुवृक्षसंयोगनिष्ठतद्व्यक्तित्वेपक्षतावच्छेदकविशि
ष्टान्यत्वसंपत्यर्थं स्वाश्रयावृत्तिवृत्तित्वस्यवैशिष्ट्यघटकत्वं वृक्षसम-
वेतत्वस्यन्यूनवृत्तित्ववारणायन्यूनवृत्तौपदार्थविभाजकावृत्तित्वस्यवि-
शेषणत्वं वृक्षान्यासमवेतस्याभावादेःसमवायेनस्वाश्रयावृत्तेर्वार-
णायस्वाश्रयावृत्तौवृत्तिमत्वस्यसमवायावच्छिन्नस्यचविशेषणतांचव-
दन्ति तन्नातिचारु तथासतिद्रव्यत्वान्यवृक्षसमवेतत्ववृक्षवृत्तिगुणा-
त्वाद्यवच्छिन्नाभावमादायदोषसम्भवे वृक्षान्यासमवेतत्वावच्छिन्ना-
भावपर्यन्तानुधावनस्यवैफल्यापत्तेः। यत्तुवृक्षवृत्तिसंयोगत्वावच्छि-
न्नाभावमादायदोषसम्भवेतत्परित्यागोनोचितइति, तदस त्तदादाय-
सन्दिग्धासिद्धेरेवसम्भवेननिश्चितासिद्ध्यनुरोधेनापितावद्दूरानुधा-
वन सार्थक्यसम्भवात् अस्मत्कल्पेचवृक्षसंयोगत्वमादायदोषस्यनसं-
भवोपि तादृशसंयोगत्वेवृक्षसमवेतकपिसंयोगत्वविशिष्टत्वस्यस-
त्वात् स्वानाश्रयपिपीलिकावृत्तिवृक्षसंयोगवृत्तित्वा न्नचयद्धर्मसमा-
नाधिकरणधर्मन्यूनवृत्तित्वघटकस्वसानाधिकरणभेदप्रतियोगिताव-
च्छेदकत्वम्विहाय सामान्यव्याप्तौयत्समवेतत्वविशिष्टान्यत्वंविशेष-
णन्देय न्तावतैववृक्षान्यासमवेतत्वावच्छिन्नाभावस्याऽपिवारणादिति



वाच्यं तत्संयोगतद्व्यक्तित्वान्यतरत्वावच्छिन्नाभावमादायासिद्धेः पूर्वक-
ल्पापेक्षयागुरुत्वाच्चेति।

वृक्षादौगगनादेरेकएवसंयोगोलाघवादिति, अथात्रवृक्षएवतत्तद-
वयवावच्छिन्नगगनसंयोगस्यभेदाभावोभिमतः किम्वावृक्षगगनसंयो-
गाद्घटादिगगनसंयोगस्यापिभेदाभावइतिविमर्षे लाघवात्सर्वेषाम-
प्यैक्यंप्राप्नोति तत्रकैश्चिदेकक्रिययैकत्रसंयोगनाशेनिःक्रियेप्यपरत्र-
संयोगनाशापत्तिः वृक्षविनाशात्तत्संयोगनाशेविद्यमानघटादिष्वपिसं-
योगनाशापत्तिश्च क्रियाश्रयनाशाभ्यामपिलाघवानुरोधेनसंयोगवि-
नाशकल्पनं पाकाश्रयनाशादितोरूपादिनाशस्याप्यप्रामाणिकत्वापत्त्यै
करूपादिवादापत्तिस्यादिति वृक्षएवतत्तदवयवावच्छिन्नसंयोगभेदा-
भावोङ्गीकार्यः शाखादौक्रियायांवृक्षेपिसंयोगप्रतिद्वन्द्विविभागजवि-
भागोत्पत्यानिःक्रियदेशावच्छिन्नोपिसंयोगोनश्यत्येव निःक्रियदेशाए-
वचसंयोगःपरमवातिष्ठते खण्डवृक्षोत्पत्यादिस्थलेऽवस्थितावयवसं-
योगसत्वेपितदवच्छिन्नसंयोगनाशवदिति समानोत्पत्तिध्वंसादिमतां
समानक्रियाणाञ्चावयविनामेकगगनसंयोगाभ्युपगमेपिनक्षतिरित्यु-
च्यतइति तदेववतत्वं। अथसमवायेनतत्तत्संयोगंप्रतितत्तद्द्रव्यत्वेन-
कारणत्वकल्पना तत्तत्संयोगप्रतिनियतदेशनियमेपि अवच्छेदकदे-
शनियमायावच्छेदकतासम्बन्धेनसंयोगंप्रतितादात्म्येनावच्छेदकदेश-
कारणत्वमपिविशिष्यैववाच्यं तत्रावच्छेदकतासम्बन्धेनतत्तत्संयोगं-
प्रतितत्तद्देशत्वेनकारणत्वंयदिस्या त्तदागगनसंयोगस्य निखिलवृक्षा-
वयवावच्छिन्नतया तंप्रतिकारणत्वकल्पनायानिष्प्रयोजनत्वा द्व्यभि-
चाराभावेनतदैक्यमप्रत्यूहंस्या त्तदेवनमूलाद्यवयवावच्छिन्नसंयोगंप्र-
तिमूलत्वादिनाकारणत्वस्यैवलाघवेनवाच्यत्वा त्तथाचमूलावच्छिन्न-
गगनसंयोगस्यशाखावच्छिन्नत्वेशाखायांमूलस्यासत्वेनव्यभिचारस्यात्
व्यभिचारवारणायकार्येनावच्छेदककोटौविभुसंयोगान्यत्वादिविशेष-
णन्तु तदैक्यावधारणम्विनागौरवेणापादातुमशक्य मभ्यर्हितञ्च-
पदार्थलाघवगौरवापेक्षयाकार्यकारणभावलाघवगौरवमेव तेनैकसं-
योगकल्पनालाघवमकिञ्चित्करमिति गगनवृक्षसंयोगस्यावच्छेदकभेदा-
द्भेदसिद्धिरित्यनुशयेनाह अतिप्रसंगभङ्गायेत्यादि। ननुगगनसंयोगस्यै-
कत्वेव्याप्यवृत्तितयाऽवच्छेदकविरहेणमूलाद्यनवच्छिन्नत्वान्नव्यभि-
चारप्रसक्तिः एवंप्राच्यांशाखायांशरविवृक्षसंयोगइत्यादिप्रतीतेरेकस्यै

घशरीरवृक्षसंयोगस्यप्राच्यादिदिगवच्छिन्नत्वशाखावच्छिन्नत्वयोः स-
त्वाद्यभिचारः नचोक्तप्रतीतौसंयोगद्वयावगाहित्वसम्भवः यत्रप्रा-
च्यांमूलएकशरीरसंयोगः प्रतीच्यां शाखायामपरशरीरसंयोगस्त-
त्र प्रतीच्यां मूलेशरीरसंयोगइतिप्रतीत्यापत्तेः एवं सं-
योगजसंयोगस्थलएकसंयोगएवावयवद्वयावच्छिन्नत्वेनव्यभिचार-
श्चेति मूलानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नवृत्तित्वविशिष्ट-
संयोगंप्रतिमूलादेःकारणत्वम्वाच्य न्तथाचविशिष्टाधिकरणताया
वैलक्षण्यान्मूलवृत्तित्वविशिष्टसंयोगाधिकरणत्वस्यमूलातिरिक्ताव-
यवेऽसत्वा द्यथानोक्तस्थलयोर्व्यभिचारस्तथामूलशाखाद्यवच्छिन्नसं-
योगव्यक्तीनांगगननिरूपितानामैक्येपिनव्यभिचारः नचोक्तव्यभिचा-
रयोर्वारणाय स्वावच्छिन्नत्वस्वावच्छिन्नानुयोगिकत्वोभयसम्बन्धेन-
शाखावत्संयोगंप्रति शाखात्वेनकारणत्वं कार्यतावच्छेदकसम्बन्ध-
श्चस्वानुयोगितावच्छेदकत्व मेवंस्वावच्छिन्नत्वस्वावच्छिन्नप्रतियो-
गिताकत्वोभयसम्बन्धेनशाखावत्संयोगंप्रतिशाखात्वादिनाकारणत्वं
कार्यतावच्छेदकसम्बन्धश्चस्वप्रतियोगितावच्छेदकत्वमितिवाच्यं गौ-
रवेणैवतस्यत्याज्यत्वा न्मेषद्वयादिसंयोगस्थलेचोभयोरवावयवस्यप्र-
तियोगितानुयोगितावच्छेदकत्वेनव्यभिचारतादवस्थ्याच्चेतिचेन्न स्वा-
वच्छेदकत्वस्वावच्छेदकशाखादिसमवेतसमवायित्वोभयसम्बन्धेन-
संयोगंप्रतितादात्म्येनशाखात्वादिनाकारणत्वएवतात्पर्यादुक्तव्यभि-
चारयोरप्रसक्तेः दिक्कालदेशेषुविलक्षणावच्छेदकत्वस्यस्वीकृततया-
विजातीयावच्छेदकतासम्बन्धेनप्राच्याद्यवच्छिन्नसंयोगंप्रतिप्राच्या-
दिदिक्त्वेनकारणत्वकल्पनादिग्विशेषावच्छेदकत्वनियमोप्युपपद्यत-
एव नचमूलशाखानिष्ठावच्छेदकतासम्बन्धेनसंयोगंप्रति मूलशाखा-
त्वादिनाकारणत्वमेवलाघवाद्यभिचारवारणायचवाच्य न्तथासतिग-
गनसंयोगस्यैकत्वेपिनव्यभिचारइतिवाच्यं विशेषरूपेणसंसर्गत्वान-
भ्युपगमात् यच्चोक्तंव्याप्यवृत्तेरवच्छेदकत्वाभावान्नव्यभिचारइति त-
दपिन शाखायांवृक्षेगगनसंयोगइत्यादिप्रतीतेर्व्याप्यवृत्तेरप्यवच्छे-
दकत्वाङ्गीकारादिति । अत्रब्रूमः अधोमूलेवृक्षेगगन संयोगः
उपरिशाखायांवृक्षेगगनसंयोगः प्राच्यामेतच्छाखायांवृक्षेगगनसंयोग-
इत्यादिप्रतीतेर्मूलावच्छिन्नस्याधोदेशावच्छिन्नतया शाखाद्यवच्छि-
न्नस्यचोपरिदेशाद्यवच्छिन्नतया मूलशाखाद्यवच्छिन्नगगनसंयोग-



स्यभेदएवस्वीकरणीयः अभेदेचोपरिमूलेवृक्षेगगनसंयोगइतिप्रती-
त्यापत्तेः नचोक्तप्रतीत्यसिद्धि र्येनचप्रमाणेनसंयोगसिद्धिस्तेनैवोक्त-
प्रतीतेरपिसंपाद्यत्वादिति । अत्रेदम्बोध्यम् उक्तप्रतीतौवृक्षवृत्तिगगन-
संयोगतत्तद्दिग्देशावच्छिन्नत्वभानस्यानुभविकत्वे वृक्षवृत्तिताया-
स्यानुभविकत्वे भवेदेवसंयोगभेदः देशनिष्ठावच्छेदकतायामेव-
दिगवच्छिन्नत्वभानस्यप्रामाणिकत्वेचनाङ्गीकार्यः । उक्तप्रतीत्यापत्ते-
र्योगा न्मूलनिष्ठावच्छेदकतायाउपरिदेशानवच्छिन्नत्वात् अतएव-
दिग्व्यभिचारंपरित्यज्यसंयोगजसंयोगेदेशव्यभिचारएवादृतोभट्टा-
चार्येण एवं वृक्षेगगनसंयोगस्याप्यवृत्तित्वङ्गगनेऽव्याप्यवृत्तिप्रतिपाद-
यतोयत्तुसंयोगमात्रत्यादिगदाधरग्रन्थस्यापिदेशनिष्ठावच्छेदकताया-
मेवदिगवच्छिन्नत्वे तात्पर्यम्वाच्य मन्यथांगगनसंयोगनिष्ठगगनवृत्ति-
तायामेकस्यामुपरिदिग्मूलेदेशावच्छिन्नत्वासंभवेनभेदस्वीकारेवृक्षेपि-
भेदस्यावश्यकत्वापत्तेः । यद्वागगनेवृक्षेसंयोगसत्तायांवृक्षस्यावच्छे-
दकतयाऽव्याप्यवृत्तितायांतात्पर्यम् अधोमूलेवृक्षेगगनसंयोग इत्यादि-
प्रतीतिरप्रमाणिक्येवेति । केचित्त्वतिप्रसंगभङ्गायेत्यादिग्रन्थमन्यथा-
व्याचक्षते तथाहिदेशाविशेषाद्यनवच्छिन्नसंयोगस्यानुपलम्भात्कारणा-
नियम्यस्यदेशाविशेषावच्छिन्नत्वस्यानियमप्रसङ्गाद्देशाविशेषस्यकारण-
त्वम्वाच्यंतत्कार्यतावच्छेदकञ्चनसंयोगत्वंव्यभिचारापत्तेः तद्वार-
णायचतत्तद्देशावच्छिन्नत्वंकार्यतावच्छेदकमभ्युपेय मेवञ्चानवच्छि-
न्नस्यव्याप्यवृत्तेर्गगनसंयोगस्योत्पत्त्यसम्भव उत्पादकसामग्र्यभावा
द्यत्किञ्चिद्विशेषसामग्रीम्विनासामान्योत्पत्त्यसंभवेनविशेषसामग्र्या-
अवश्यापेक्षणीयत्वात् विशेषश्चावच्छिन्नएवक्लृप्तोऽनवच्छिन्नस्यक-
कल्प्यत्वात्क्लृप्तानुसारेणैवचकल्पनायाः कार्यत्वा दित्यव्याप्यवृत्तिग-
गनसंयोगासिद्धौनस्वरूपासिद्ध्यवकाशइति तन्नचारु वृक्षेव्याप्यवृत्तेरे-
व गगनेऽव्याप्यवृत्तितयातदुत्पत्तिसम्भवादितिदिक् ॥ ० ॥

दीधितौयत्तदर्थयोरननुगमादिति, यत्तदर्थसंयोगघटत्वादीनाम-
नुगतैकरूपाभावेनव्याप्तिकोटौप्रवेशासम्भवाद्धटसमान्याभावघटीयया-
वद्विशेषाभावादीनांव्याप्तिग्रहश्चनसंयोगीयत्यावद्विशेषाभावालिङ्गकसं-
योगसामान्याभावानुमित्युपयोगी तयोर्विशिष्यव्याप्तिश्चाग्रेनिराक-
रणीया नचयत्तच्छब्दार्थत्वमेवानुगतोधर्मः तस्यप्रमेयत्वादिसाधा-
रण्येनयत्त्वाश्रयसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटस्य-

प्रायसोऽसत्वप्रसंगात् नचयत्वन्तत्वन्धर्मविशेषः मानाभावात्
यत्पदेनैकधर्मोपादानेतत्पदेनापितस्यैवोपादानमिति नियमस्याश
क्यानिर्वाह्यत्वाच्चेतिभावः। प्राचाम्मतेयत्तदर्थयोरनुगमादाहेति अनुग
तत्वेसत्यननुगतकार्यकारीधर्मविशेषोयत्वतत्वमनुभवानुरोधात् उ-
क्तनियमोपितत्स्वाभाव्यादेवोपपद्यते कथमन्यथास्वीयस्तनपाना-
दिगोचरप्रवृत्तेस्तनपानादिगोचरकार्यताज्ञानादिनाव्याप्तिमुपलभ्य-
योयत्रप्रवर्त्ततेसकार्यतयातज्जानातीति सामान्यतोव्याप्तिमुपादाय ग-
वानयनप्रवृत्तितत्कार्यज्ञानयोरगृहीतव्याप्तिकेनापितत्प्रवृत्यातज्ज्ञानम-
नुमीयते यदिचसाध्यजातीयसाधनजातीययोः कयोरपिव्यभिचरस्या
नुपस्थितावुपस्थितानिखिलसाध्यजातीयसाधनजातीयव्याप्तेर्विशिष्य-
ग्रहादेवागृहीत व्याप्तिप्रवृत्तिविशेषालिङ्गेन कार्यत्वविशेषज्ञानानुमा-
नसम्भव इति सामान्यव्याप्त्यभ्युपगमोनिरर्थक इत्युच्यत तदाप्र-
कृतेपि तथैव संयोगसामान्याभावसिद्ध्याभिमतसिद्धिरिति प्राचा-
माशयः। इदन्तु बोध्यम् यत्वतत्वयोरननुगतत्वेपि न क्षतिः जा-
तिर्जातिमतीजातित्वादित्यनुमानादेवाभिमतसिद्धिः साध्यता च
स्वतादात्म्यस्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटव्या-
पकाभाव प्रतियोगितावच्छेदकत्वोभयसम्बन्धेन । यद्वावृक्षाद्यवृत्ति-
स्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताक यत्किञ्चि-
दभावकं यद्य त्तद्भेदकूटवान् योयः सवृक्षनिष्ठाभावप्रतियोगिताव-
च्छेदक इति व्याप्त्यैघसामान्यव्याप्तिस्थलाभिषिक्तया भट्टाचा-
र्योक्तयाभिमतसिद्धिरिति * ॥

द्यादकत्वन्दुर्घटमिति, अथावच्छिन्नत्वैकानवच्छिन्नत्वोभयाभा-
ववत्वमेवास्त्वेकावच्छिन्नत्वमुभयाभावघटकञ्चैकावच्छिन्नत्वं स्वसमा-
नाधिकरणावच्छिन्नतादृशाभावाधिकरणताकूटावच्छेदकावच्छिन्न-
त्वरूप मेवञ्च गुणनिष्ठाधिकरणत्वस्यावच्छिन्नत्वविरहेणोभयाभाव-
ववत्वात्तस्यसाध्यव्यापकत्वं वृक्षनिष्ठेसंयोगविशेषाभावधिकरणत्वे-
कुत्रापिनस्वसमानाधिकरणनिखिलतादृशाधिकरणतावच्छेदकाव-
च्छिन्नत्वमित्युभयाभावविरहेणसाधनाव्यापकत्वम् कपिसंयोगविशे
षाभावाधिकरणत्वमात्रस्यैव स्वसमानाधिकरणनिखिलतादृशाव
च्छेदकमूलावच्छिन्नत्वसत्वेनोभयाभाववत्तयाकपिसंयोगाभावरूप
साध्यव्यापकत्वस्यापिसम्भवेन नचतथापीत्याद्युक्तशङ्काया अपि



नावकाशः भट्टाचार्येणचेदमेकावच्छिन्नत्वं कपिसंयोगाभावरूपसा-
ध्यव्यापकत्वसम्पत्तयउक्तम् नचाविशिष्टाभावमुपेक्ष्यकथमुभयाभाव
उक्त इतिवाच्य मनिर्वाहा त्तथाहिजातित्वरूपत्वादीनाम-
पियत्पदार्थतयातदवच्छिन्नाभावरूपसाध्यव्यापकत्वस्योभयाभाव-
विशिष्टतादृशविशेषाभावे ऽसम्भवः स्वसमानाधिकरणावच्छिन्न
तादृशाभावाधिकरणत्वस्यतदवच्छेदकत्वस्यचाप्रसिद्धे र्जातिवि
शेषाभावाद्यधिकरणत्वमात्रस्यैव व्याप्यवृत्तित्वा त्तथाचै
कावच्छिन्नत्वाप्रसिद्ध्यातद्घटितोभयाभावाप्रसिद्धेः तदुपपत्तयेचै-
कावच्छिन्नत्वघटकाधिकरणत्वाविशेषणावच्छिन्नत्वस्याव्याप्यवृत्त्य-
भावत्वावच्छिन्ननिरूपितत्वानवच्छिन्नत्वोभयाभावरूपस्यावच्छेदक-
त्वस्यचतद्घटकस्य स्वनिरूपितावच्छेदकत्वाभाववत्वसम्बन्धा-
वच्छिन्नस्वाभाववत्वरूपस्यवाच्यतया विशिष्टाभावप्रवेशे जाति-
त्वरूपत्वादीनांयत्पदेनोपादानेविशिष्टाप्रसिद्ध्या साध्योपाध्योः सा-
मान्यव्याप्त्यानिर्वाहः यत्पदेनजातित्वस्योपादाने देशमात्रस्यैवप्रागु-
क्तादृशावच्छेदकत्ववत्तया तदनवच्छिन्नत्वावच्छिन्नत्वयोर्विरुद्ध-
त्वादिति। यद्वायदीययावद्विशेषाभावत्वावच्छिन्ननिरूपितमेकमधिकर-
णत्वमेकावच्छिन्नत्वविशेषितंलघुभूतमुपाधिः एकावच्छिन्नत्वञ्चाव-
च्छिन्नत्वैकानवच्छिन्नत्वोभयाभाववत्वमेव तद्घटकमेकावच्छिन्न-
त्वञ्चैकमात्रवृत्तिधर्मावच्छिन्नावच्छेदकताकत्व मेवञ्चाव्याप्यवृत्त्यभा-
वसाधारणकूटत्वेनव्याप्यवृत्त्यधिकरणत्वमप्यव्याप्यवृत्त्येवेति संयोगी
ययावद्विशेषाभावाधिकरणत्वेऽवच्छिन्नत्वस्यानेकावच्छिन्नाभावकूटा-
धिकरत्वस्यवृक्षावयवत्वेनैव देशावच्छिन्नतयैकानवच्छिन्नत्वस्यचस-
त्वेनतस्यसाधनाव्यापकत्वं कपिसंयोगीययावद्विशेषाभावाधिकरण-
त्वस्यतन्मूलावच्छेद्यतयोभयाभावत्वेनसाध्यव्यापकत्वमपिसम्भवति
अत्रविशिष्टाभावनिवेशेनक्षतिः समानाधिकरणोभयत्वस्यैकाविशिष्टा-
परत्वरूपत्वात् । भट्टाचार्याणामुभयाभावोक्तिश्चात्रकल्पेस्वातन्त्र्ये-
णनदृयते किन्तुप्रागुक्तोभयाभावघटकमेकावच्छिन्नत्वमेकप्रकारेण-
निरुच्याथवेत्यादिनाप्रकारान्तरेण तस्यैवनिर्वचनेउभयाभावात्मकत्व
मितिग्रन्थलाघवानुरोधेनापितथोक्तिसम्भवेनवापूर्वपक्षानवकाशा-
दितिचे दुपाधिसाध्ययोस्सामान्यव्याप्त्यनिर्वाहस्याकिञ्चित्करतया
निरवच्छिन्नत्वरूपैकावच्छिन्नत्वनिवेशएव लाघवमित्याशयेनाह एका-

वच्छेदेनेत्यादिना, अधिकरणतामात्रस्याधिकरणवृत्त्यसाधारणधर्मावच्छिन्नतया देशकालेत्युक्त एकधर्मावच्छिन्ननिरूपिताधिकरणत्वस्यैकत्वे गुणनिष्ठस्यद्रव्यादिनिष्ठस्यचाधिकरणत्वस्यावच्छिन्नत्वमेवस्या दनवच्छिन्नत्वमेववास्यादिति देशकालानवच्छिन्नत्वं वृत्तित्वविशेषणतयोपात्तं तथाचतादृशाधिकरणत्वे गुणवृत्तित्वमनवच्छिन्नम्वृक्षादिवृत्तित्वञ्चसावच्छिन्नमितिनदोषइति ।

ननूपाधेर्व्यभिचारोन्नायकतयाव्याप्तिबुद्धावेवविरोधितयासाध्यसाधनयोः प्रकृतेसामान्यतएवव्याप्तिर्गृहीतत्वेन तत्रसामान्यतएवसाध्योपाध्योर्व्याप्तिबुद्धेर्विरोधित्वम्वाच्य मन्यथाधूमाव्यापकमहानसीयतृणादेर्महानसीयवह्निव्यापकताबुद्धेर्वह्नित्वेनधूमत्वेनव्याप्तिबुद्धौविरोधित्वं स्या त्सामान्यतश्च साध्योपाध्योर्व्याप्तिर्नसम्भवति कपिसंयोगसामान्याभाववतिनिरवच्छिन्नकपिसंयोगीयविशेषाभावकूटवत्वस्यव्यभिचारित्वादित्याशयेनाशङ्कते नचतथापीत्यादिना । उक्तव्याप्तौसाध्यविधयाप्रवेशादिति, साध्यसाधनयोर्व्याप्तौव्यभिचारवारणायजात्यवच्छिन्नाभावप्रवशस्योक्तत्वादित्यर्थः तेनसाध्यसाधनयोर्व्याप्तौजातिप्रवेशस्यप्रागेवकृतत्वेनोक्ताशङ्कायानसन्दर्भविरोधः एकावच्छेदेनतदीययावद्विशेषाभावस्योपाधित्वादितिदीधितौ कपिसंयोगाभावमादायोपाधिव्याप्तिभङ्गाशङ्कायां जातिप्रवेशस्यस्मारितत्वात् अतएवोपाधिसंपत्यर्थंजात्यवच्छिन्नाभावप्रवेशोनोचितइत्याशंकापि निरस्ता व्यभिचारवारणायैवतत्प्रवेशस्यप्रागुक्तत्वादिति ॥ जात्यवच्छिन्नाभावश्च संयोगघटोभयाभावादिकमादायसिद्धसाधनवारणाय जातीतरधर्मावच्छिन्नप्रतियोगिताकाभावरूप स्तज्जातिगतैकत्ववृत्तिप्रतियोगिताकाभावपर्यवशायी नातःसंयोगत्वरूपजातेःकपिसंयोगाभावप्रतियोगिताबच्छेदकत्वेपिदोषतादवस्थ्यमितिभावः । ० ॥

गुणविभाजकजातेरेवेति ॥ अयमभिप्रायः यत्वतत्वघटितसामान्यव्याप्तौतदेकविशेषसाध्यव्यापकत्वतादृशसाधनाव्यापकत्वयोरेकत्रग्रहोपिविरोध्यनुभवात् गुणविभाजकयज्जात्यवच्छिन्नाभावश्च यज्जात्यवच्छिन्नाभावत्वेनसाध्यविशेषः गुणविभाजकतज्जातिसामानाधिकरण्योभयावृत्तिधर्मावच्छिन्नाभावकूटोपिचसाधनविशेषः यत्वतत्वघटितस्थलवह्निधूमादिस्थलेमहानसीयवह्न्यादेर्व्यापकत्वाप्रतिभासनान्नदोषः एतेनसाध्यसाधनव्याप्तौजात्यवच्छिन्नाभावप्रवेशवद्गुणविभा-



जकजात्यवच्छिन्नाभावप्रवेशप्रयोजनविरहादुपाधिसंपत्यर्थन्तत्प्रवेशश्चानुचितइतिनिरस्तम् । निरवच्छिन्नवृत्तिकत्वविशिष्टसंयोगीययावद्विशेषाभावस्याप्युपाधित्वंयद्यपिसंभवति तथापिसामान्यव्याप्त्यनुरोधेनसामान्यएवोपाधिरुक्तः विशेषव्याप्तौचविशेषोपाधिरग्रेवक्ष्यतएवेति गुणविभाजकजातित्वञ्च गुणत्वव्याप्यत्वेसतिगुणत्वव्याप्याव्याप्यजातित्वं तदपिगुणत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकजातिमदन्यजातित्वं जातिमत्ताचस्वसामानाधिकरण्यस्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेनेति । वस्तुतस्तुगुणविभागसूत्रजन्यवोधीयोद्देश्यतावच्छेदकत्वमेवगुणविभाजकत्वंवोध्यम् । अस्तुसामान्यव्याप्तौसामान्यस्यैवोपाधेःप्रदर्शनीयत्व न्तथापिनक्षतिरित्याशयेनाह यत्त्विति,तथाचपरस्परानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टतदीययावद्विशेषाभावस्योपाधेः तत्सामान्याभावव्यापकत्वं सामान्यतएवसम्भवतिकपिसंयोगसामान्याभाववत्याभिघातसामान्याभाववतिचवृक्षेमूलस्यान्तर्देशस्यचतदीयविशेषाभावमात्रावच्छेदकत्वेनपरस्परानवच्छेदकत्वविरहेणपरस्परानवच्छेदकतत्तच्छाखाद्यनवच्छिन्नमूलान्तर्देशाद्यवच्छिन्नवृत्तित्वविशिष्टतत्तदीययावद्विशेषाभावयोरसत्वा त्साधनव्यापकत्वन्तुनसम्भवतिसंयोगीययावद्विशेषाभाववतिवृक्षेतादृशवृत्तित्वविशिष्टस्यतस्यासत्वात् देशमात्रस्यैवतत्रपरस्परानवच्छेदकतयातदनवच्छिन्नत्वस्यनिरवच्छिन्नवृत्तित्वएवसत्वादितिभावः । नचपरस्परत्वप्रवेशादननुगमः तदीयविशेषाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वविशिष्टाधिकरणत्वस्योपाधित्वेनविवक्षणात् वैशिष्ट्यंच स्वावच्छिन्ननिरूपितत्व स्वविशिष्टानवच्छिन्नत्वोभयसम्बन्धेनस्ववैशिष्ट्यंच स्वाश्रययत्किंचिदभावाधिकरणतानवच्छेदकत्वसम्बन्धेन । अथवातादृशाभावत्वविशिष्टाधिकरणताकूटवत्वमेवोपाधिः वैशिष्ट्यंच प्रागुक्तोभयसम्बन्धेनेति यत्किंचित्त्वप्रवेशा त्संयोगविशेषाभावत्वाश्रयाभावाधिकरणतानवच्छेदकदेशाप्रसिद्ध्यादिप्रयुक्तोपाध्यसम्भवानवकाशः । अत्रपरस्परावच्छेदकंयद्यत्तदनवच्छिन्नत्वंतुनप्रवेश्यम् तस्यनिरवच्छिन्नत्वएवपर्य्यवसानेन पूर्वकल्पाविशेषादिति ॥ वृत्यनियामकस्यप्रत्तियोगितवच्छेदकत्वपक्षे ऽवच्छेदकतासम्बन्धेनतदभाधिकरणीभूतदेशस्या वच्छेद्यतासम्बन्धेनाभाववत्व मेकावच्छिन्नत्वं व्याप्यवृत्तिरूपादिविशेषाभावकूटाधिकरणतायाअपि सं-

ग्राहकंभविष्यतीत्याशयेन चिन्त्यमित्युक्तम्। बहुषुपुस्तकेषु तादृशार्थप्रतिपादकः केचित्वित्यादिग्रन्थएवोपलभ्यते । अत्रावच्छेद्यत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावनिवेशनञ्च सामान्याभावनिवेशपक्षेलाघवानुरोधेनैवा वच्छेद्यत्वस्यप्रतियोगित्वे तत्रस्वरूपसम्बन्धावच्छिन्नत्त्वस्यप्रवेश्यत्वात् अवच्छेदकत्वसम्बन्धावच्छिन्नाभाववद्यद्यत्तन्निष्ठावच्छेदकत्वानिरूपितत्वाभावनिवेशेच्च गगनादीनामपि यत्पदार्थतया तन्निष्ठाव्याप्यवृत्तितानियामकावच्छेदकत्वाप्रसिद्ध्योक्ताभावाप्रसिद्धिःस्यादितितन्निवेशः। वृत्त्यनियामकस्याभावप्रतियोगिताभावाप्रसिद्धिःस्यादितितन्निवेशः। वृत्त्यनियामकस्याभावप्रतियोगितानवच्छेदकत्वेऽपि तत्सम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाभावएव प्रमीयाविशेष्यत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगताकोनिवेश्यइतिवोध्यम् ।

तदनवच्छेदकस्येति, । नचव्याप्यवृत्तिरूपाद्यभावाधिकरणतायाअप्यवच्छेदकत्वस्यसंसर्गधर्म्मविशेषादौप्रसिद्धिसम्भवा त्तत्साधारणावच्छेदकत्वोपादाने क्षत्यभावान्नदोषइतिवाच्यम् धर्म्मसंसर्गादिनिष्ठावच्छेदकत्वाव्याप्यवृत्तितानियामकावच्छेदकत्वादिसाधारणावच्छेदकतात्वस्यैकस्याभावादिति । यद्यवच्छेदकतात्वद्वयमन्यतरत्वेननिवेश्य स्वनिरूपितान्यतरवदभाववत्त्वमेवा नवच्छेदकत्वंविवक्षित न्तदानकोऽपिदोषइतितुविभाव्यम् ।

तन्मतेस्संयोगसामान्याभावस्यकेवलान्वयितयेति, अथपरमाणुद्वयसंयोगस्याभावोनपरमाणौसम्भवतितस्यानवयवत्वादिति कथंकेवलान्वयित्वं तथासतिपरमाणावेवव्यभिचारवारणाय हेतुविशेषणसार्थक्यसम्भवात्कथंवैयर्थ्यमुक्तम्। भट्टाचार्य्येणचप्राचीनमतग्रन्थएववृक्षत्वावच्छेदेनसंयोगसमान्यंव्यवस्थाप्य गगनादौसंयोगाभावसाधनपरतांसामान्यानुमानस्यप्रतिपादितम् तद्ग्रन्थेसुतरामुक्ताशङ्का । यत्तु वृक्षत्वावच्छेदेनवृक्षइवद्रव्यत्वावच्छेदनपरमाणावपि द्रव्येसंयोगसामान्याभावसम्भवेन केवलान्वयित्वसम्भवइति तन्न तथासतिद्रव्यत्वावच्छेदेननकस्यापिगुणस्यसम्भवइति तत्सामान्याभावस्यापिसत्तयोपाधिप्रदर्शनासंगतेः नचादिपदग्राह्यद्रव्यभिन्नत्वस्योपाधितासंभवस्तस्याऽपिप्रमेयत्वावच्छेदेनद्रव्यवृत्तित्वसम्भवात्तस्मात्साधारणधर्ममात्रावच्छेदेनैवस्वस्मिन्नभावसत्वमिदानीम्प्राचाम्मतेनवाच्यं वृ



क्षत्वावच्छेदेनेत्यादौ वृक्षत्वपदस्यापितद्व्यक्तित्वपरत्वमेववोध्यम् । एवञ्च वृक्षत्वावच्छेदेनवृक्षइव परमाणुत्वावच्छेदेनापिनतत्रतत्सत्वसम्भव एवं द्रव्यत्वावच्छेदेनपरमाणौद्रव्येतत्स्वीकारे वृक्षेऽपितत्रतत्सत्वमवारितंस्यादिति भट्टाचार्यस्यवृक्षपक्षकानुमानपरित्यागोनिर्वीजस्स्यादिति तद्ग्रन्थासंगतिर्दुर्वारेत्तिचेत्मैवं परमाणावपिदिग्विशेषावच्छेदेनसंयोगाभावसत्वसम्भवा दुक्तञ्च वैशेषिकसुत्रोपस्कारेशंकरमिश्रपादैः । परमाणावपिदिग्विशेषस्यावच्छदकत्वसम्भवइति चिन्त्यमिति, चिन्ताचतत्र दिग्विशेषस्यावच्छेदकत्वाननुभवएव। यद्वा परमाणौसंयोगाभावः प्रलयावच्छेदेनवर्त्ततइति केवलान्वयित्वसम्भवः। नचैवमुत्पत्तिकालावच्छेदेन संयोगसामान्याभावसत्ववृक्षेऽपिस्यादेवेति तत्साधनायासोवृथेतिवाच्यं समवायेनगुणंप्रतितादात्म्येनद्रव्यत्वेनकारणत्वएवोत्पत्तिकाले संयोगाद्यभावसम्भव स्तत्रैवहिनमानं लाघवेनतत्तद्गुणविशिष्टावयविनंप्रति ततज्जातीयगुणविशिष्टावयवत्वादिना कारणत्वस्यैववाच्यत्वादितिचिन्यम् । भट्टाचार्य्यैस्तु वृक्षे संयोगसामान्याभावसाधनपरित्यागस्तु प्रौढिप्रकटनाशयाकृतः तैरपि प्राचांमतेन वृक्षेयावत्संयोगाभावोभ्युपेयएवेति न संयोगाभावकेवलान्वयित्वप्रतिपादकस्यवैयर्थ्यप्रतिपादकस्यचतद्ग्रन्थस्यासङ्गतिरित्यलम् ।

ननु यद्यपि वृक्षेसंयोगसामान्याभावस्य संदिग्धतयोपाधेर्नसाध्यव्यापकत्वनिश्चयसंभवः नच साध्यव्यापकत्वसंशयादस्तुसंदिग्धोपाधितेतिवाच्यं साध्यवत्तयानिश्चितउपाधिसंशयस्थलएवसंदिग्धोपाधेस्स्वीकरणीयत्वा दन्यथापक्षेतरत्वस्यसर्वत्रोपाधिताप्रसङ्गा त्तथापिसाध्योपाध्योः साध्यसाधनयोश्चयत्रव्याप्तिग्राहकसाम्यंतत्रैवसन्दिग्धोपाधेस्स्वीकारेणप्रकृतव्याप्तिग्राहकवैषम्यस्यतर्करूपस्यविरहेणसन्दिग्धोपाधिस्संभवत्येवेति तत्फलेव्यभिचारग्रहएवाशंकामाविष्करोति अत्रयद्यपीदित्यादिना । वस्तुतस्तु संयोगत्वंयदिकिंचिदवच्छिन्नद्रव्यनिष्ठाभावप्रतियोगितावच्छेदकंस्या त्किंचिदवच्छिन्नद्रव्योत्पत्तिकावृत्तिस्स्यात्कपिसंयोगत्ववदिति तर्केणवाधोन्नीतपक्षेतरत्वपन्निश्चितोपाधितैव वृक्षत्वस्यावच्छेदकत्वशंकाचाग्रेनिराकरिष्यति । यद्वा संयोगाभावोयदिगुणाभावद्रव्यत्वाद्यभावव्यभिचारीस्या द्गुणादिव्यापकप्रतियोगिकोनस्या द्गुपाद्यभाववत् व्याप्याभावव्याप्यत्वनि

यमोव्यापकाभावे गृहीतोऽत्रविपक्षवाधकः यस्यचनयद्व्यापकप्रतियो-
गिकत्वंनतस्यतदभावव्याप्यत्वं यथावन्ह्यभावस्यनधूमाभावइतिव्य-
तिरेकस्यापिग्रहः नचविपक्षवाधकानियमेव्याप्यवृत्यभावत्वमुपाधिः
कथमन्यथाकपिसंयोगाभावस्यनैतद्वृक्षत्वाभावव्याप्यत्वमितिवाच्यं
संयोगाभावेतत्ताद्दिग्देशस्यावच्छेदकत्वविरहात् वृक्षत्वादीनामवच्छे-
दकत्वस्यनिराकरिष्यमाणत्वादिति निश्चितोपाधिता ॥ अतएव तथा-
पीत्यादि ग्रन्थासंगतिरापन अन्यथा वृक्षेसंयोगसामान्याभावस्यसं-
दिग्धत्वेन गुणाद्यभावस्यव्यापकत्वसंदेहेतद्व्याप्यत्वस्यापिसंदिग्धतया
नानुमापकत्वसंभवः हेतुमत्वानिश्चयस्यैवानुमितिजनकत्वादित्यसंग-
तिस्स्यादिति । अथवा स्वमतसिद्धव्याप्तिमतोविनानुकूलतर्कं संयोग
यावद्विशेषाभावस्यहेतुतयायथोपन्यासः तथास्वमतसिद्धगुणाभाव-
व्याप्यत्वस्यहेतुतयोपन्यासस्संभवत्येव व्यभिचारसंशयस्य यथाभव-
तांनप्रतिबन्धकत्वं तथास्माकमपि एकतरव्याप्तिग्राहकतर्कावतारेतु-
ल्यवलत्वाभावान्नप्रतिपक्षता तेनपर्वतोवह्निमान् धूमादित्यत्र वह्निः
पर्वतावृत्तिः पर्वतेतरत्वव्याप्यत्वादित्यस्यन प्रतिपक्षतेतिहृदयम् ॥

तथाचेति, आपत्तेरापाद्यव्यतिरेकनिश्चयाधीनतया प्रसंगादित्यु-
क्तथाव्यभिचारलाभइतिभावः । नच वायुत्वादौरूपाद्यनवच्छेदकतया
गृहीतेरूपाद्यभावावच्छेदकत्वस्यतत्तन्मूलशाखादौतत्तत्संयोगानवच्छे-
दकतयाज्ञातेतत्तदभावावच्छेबकत्वस्यचगृहीततयोक्तसामान्यव्याप्तेरेव
प्रमेयत्वेऽपिगुणाद्यभावावच्छेदकत्वंकुतोनसिद्ध्येदितिवाच्य मतिप्रस-
क्तेस्वरूपसंबन्धरूपावच्छेदकत्वाभावस्यानिर्णीततयोक्तावच्छेदकत्वा-
भावनिर्णयेनप्रतिवन्धात् देशकालादावेवोक्तव्याप्तेः प्रामाणिकतयात-
दितरत्रत्तन्नियमेमानाभावाच्च । दीधितावापत्ति दानंच पराभ्युपगत-
व्याप्तिमाश्रित्य तात्पर्यंचव्यभिचारएवसर्वत्रव्याप्त्यभ्युपगमापत्तिस्स्थ-
ल इति वोध्यम् ॥

पक्षसमत्वादिति, इदंचसाध्याभाववत्वांशेनिश्चयरूपम् शेषांशे
संशयसाधारणं व्यभिचारज्ञानंविरोधीतिमतेन वोध्यम् ।

घटपूर्ववर्तित्वेति, इदंचस्वरूपसंबन्धरूपकारणत्वस्योपलक्षकम्
स्वरूपसंबन्धरूपतदवच्छेदकत्वस्य नातिप्रसक्तेसंभवः । एतेननियत-
पूर्ववर्त्तित्वावच्छेदकत्वस्य कार्यपूर्वकालवृत्त्यत्यन्ताभावप्रतियोगितान-
वच्छेदकत्वरूपस्यपारिभाषिकस्यैवव्यवहृतत्वस्वीकारेऽपिनक्षतिः ॥



वह्निसामानाधिकरण्यसामान्येति, तथाचस्वरूपसंबन्धरूपावच्छे-
दकत्वघटितस्यप्राचीनमतसिद्धसाध्यसामानाधिकरण्यावच्छेदकत्वरू-
पव्याप्यतावच्छेदकत्वस्यनानुपपत्तिरितिभावः ॥ अनुकूलतर्कविरह-
स्थलेसाध्याभाववत्वांशेसंशयात्मक व्यभिचारज्ञानमपि प्रतिवन्धक-
मित्याशयेनाहकेचित्वित, यथाचेत्यादिग्रन्थस्योक्तावच्छेदकत्वसाध-
कानुमान वाधनिरासपरतांदर्शयति वृक्षत्वेत्यादि ।

व्यवहारेति, शब्देत्यर्थः संदिग्धाप्रामाण्यकमिति, आप्तोक्तत्वा-
निश्चयेनेत्यादिः । नन्वाद्यक्षणावच्छिन्नोघटो गुणसामान्याभाववान्
गुणसमवायिकारणस्वाव्यवहितोतरत्वशून्यत्वादित्यनुमानमेवास्तु-
मानमितिचेन्न द्रव्योत्पत्तावयवद्वयसंयोगस्यासमवायिकारणतया-
तत्सद्भावार्थमस्तु समवायिकारणस्यप्राक्त्वापेक्षासमवायिकारणगुण-
जन्येगुणे समवायिकारणङ्कार्येणसहभावेनैवापेक्ष्यतइत्येतदर्थेनाप्रयो-
जकत्वशंकाकवलितत्वादनुमानस्येतिभावः ॥

प्रलयत्वमेवव्याहन्येतेति, भावकार्य्यत्वं स्वाश्रयप्रागभावानधि-
करणवृत्तिध्वंसप्रतियोगिवृत्ति स्वाश्रयानधिकरणस्वाश्रयप्रागभा-
वासमानकालीनवृत्तिध्वंसप्रतिगिवृत्तिवा कार्य्यैकवृत्तित्वा चैत्रत्वव-
दित्यनुमानस्यैवप्रलयेप्रमाणतया तेनैव कार्यानधिकरणतयैवतत्सिद्धेः
तदभावेप्रलयत्वस्यैवासिद्धिप्रसंगादिति भावः ।

मानाभावादिति, स्वत्वस्याननुगततयादृष्टान्तपक्षयोरनुगतसा-
ध्याभावेनानुमानासंभवादागमस्यचतात्पर्यानिर्णयादिनासंदिग्धार्थत-
याप्रामाण्यानिर्णयादितिभावः ॥

अथोक्तरूपेणप्रतीतिविषयत्वस्यावच्छेदकत्वाभावेवृत्तित्वाभावेवा
कल्पने कुत्राप्यभावस्याव्याप्यवृत्तित्वंनस्या दित्यस्वरसादाहयदित्रू-
यादिति ॥ सम्बन्धसत्तायास्सम्बन्धिसत्ताप्रयोजकतयाप्रयोजकविर-
हेप्रयोज्यविरहस्यावश्यकत्वमित्याशयेनाह तथाचेति ।

यत्सम्बन्धाभाववानिति, अभावश्चतत्सम्बन्धेन तद्वत्ताबुद्धिर्येन-
सम्बन्धेनतत्सम्बन्धसत्तामपेक्षते तत्सम्बन्धावच्छिन्न प्रतियोगिताकः
तेन जलाद्यवच्छेदेनकालिकेन वह्निसंयोगाभाववतिसमये तदवच्छेदे-
नसंयोगसम्बन्धावच्छिन्नवह्न्यभावासत्वेऽपिनव्यभिचारः ॥ अन्य-
थेति, सम्बन्धसत्तायाः सम्बन्धिसत्ताप्रयोजकत्वमभ्युपेत्योक्तस्य
नियमस्यसप्रयोजकत्वोपगमइत्यर्थः । तुल्यन्यायेनेति, प्रयोजकाभा-

घस्य कार्य्याभावइवोक्तस्यासाधारणप्रयोजकस्य प्रयोज्यस्यापिनि
यामकतयो दीच्यव्याप्तेरपिसप्रयोजकत्वमेवस्यादितितात्पर्यार्थः ॥

योयदीयेत्यादि, अत्ररूपसमवायवतिवायौरूपासत्वेनव्यभिचारः
समवायस्यनानात्वमभ्युपेत्यवदरादेरित्यत्रादिपदाद्वायोरप्यापत्तिविशे-
ष्यतांवास्वीकृत्य यन्निरूपितत्वविशिष्टस्यसम्बन्धस्यानुयोगितया-
व्याप्यत्वम्बोरीकृत्यवारणीयः रूपसमवायीवायुरित्यप्रत्यया
द्रूपनिरूपितत्वविशिष्टसमवायानुयोगित्वंवायौ कुण्डसंयोगी-
वदरइतिप्रत्ययाद्धितत्रकुण्डनिरूपितत्वविशिष्टसंयोगानुयोगित्वंच-
स्वीक्रियतएव नचसम्बन्धादिपदोत्तरमत्वर्थीयस्यप्रतियोगित्व-
मर्थः सम्भवति। घटसमवायिरूपमित्यप्रत्ययात्। अथसम्बन्धिस-
त्तायाः सम्बन्धसत्ताप्रयोज्यत्वानभ्युपगमे ह्रदादौनवह्निः पर्वतेत्वस्ती-
त्येतन्नियमोनस्यादितिचे त्सत्यम् सम्बन्धसत्ताधीनत्वपक्षेऽपि-
सम्बन्धस्यासम्बद्धस्यनियामकत्वउक्तदोषतादवस्थ्यात् सम्बद्धस्य
तथात्वेचानवस्थापातात्सम्बन्धस्यक्वचित्स्वरूपतोनियामकत्वाभ्युप-
गमएवकार्य्यइति सम्बन्धिसत्तायाएवस्वरूपप्रयोज्यत्वंवाच्यं रूपा-
न्तरेणप्रयोज्यप्रयोजकभावयोरेकत्राविरोधात् संयोगसमवायादीनांसं
वन्धत्वन्तुविशिष्टानुभववलात्लाघवाच्चाश्रीयतइत्येतदभिमानं।

कुण्डादिमत्वापत्तिरिति, इदन्तुचिन्तनीयंसम्बन्धिसत्तायां सं-
वन्धसत्ताव्याप्यत्वेव्यभिचारदर्शनसामान्याभावेननिर्णीतव्यापकाभा-
वेनव्याप्याभावसाधनेतदुभयोर्व्याप्तेसप्रयोजकत्वाङ्गीकारेपिनोक्तदोषः
प्रयोज्यप्रयोजकभावाङ्गीकारपक्षेपूर्वोक्तव्याप्तेस्सप्रयोजकत्वाङ्गीकारेऽपि
तत्तन्निरूपिततत्तत्प्रतियोगिकत्वविशिष्टसंयोगसमवायादेरनुयोगित-
यानियतस्यसंसर्गत्वस्वीकारात् संयोगातिरिक्तसंबंधवाचकपदोत्तर
मत्वर्थीयस्यैवानुयोगित्वार्थकत्वात्संयोगपदोत्तरस्यचाश्रयत्वमात्रा-
र्थकत्वात्कुण्डादिनिरूपितत्वविशिष्टानुयोगित्वस्यसत्वेऽपि तत्प्र-
तियोगिकत्वविशिष्टानुयोगिकत्वविरहात्सम्बन्धान्तरस्थलेविशिष्टानु-
योगित्वभावेऽपि संयोगस्थलेतस्यास्वीकाराद्वोक्तदोषस्यनसंभव
इति।

नचैतत्कालेत्यादि। नचात्रविनिगमकाभावइतिवाच्यं स्वारसि-
कोक्तप्रतीतेः क्लृप्तेनतन्तुनिष्ठघटाभावेनविषयपर्य्यवसानसम्भवेऽ-
क्लृप्तविषयकत्वस्यान्याय्यतायाएवविनिगमकत्वादितिभावः। एत



त्कालस्यतदवच्छेदकत्वेति, नचैवमिदानीमत्रघटोनास्तीत्यत्रोभयाधि-
करणत्वावगाहित्वंभट्टाचार्य्योक्तङ्कथंसंगच्छतइतिवाच्य मत्रेत्यस्यैतत्क-
पालइत्यर्थकत्वा त्तत्रोभयाधिकणत्वस्यैवाव्याप्यवृत्तित्वादिति ॥ ० ॥
प्रतियोगिकुक्षावग्रहेपीति, नन्वेतत्कालवृत्तित्वस्यतन्तुविशेषणत्वे-
नायन्दोष इति चेत् मूलेवृक्षेनकपिसंयोग इत्यत्रापि वृक्षइतिसप्त-
म्याअवच्छेदकत्वार्थकत्वमभ्युपेत्यवृक्षावच्छेदक मूलवृत्तिकपिसं-
योगाभावविषयकत्वसम्भवादव्याप्यवृत्यभावोच्छेदप्रसङ्गः नचे
दानीमेतत्कपालेनघटइत्यत्र कालवृत्तिकपाले कपालवृत्तिकालेवा घ-
टात्यन्ताभावाविषयकत्वेऽव्याप्यवृत्यभावाङ्गीकार इतिवाच्यं तत्रा
प्येतत्कालावच्छिन्नैतत्कपालवृत्तित्वाभावस्यैवघटेविषयत्वात्। नच
वृक्षावच्छेदकत्वस्यवृक्षसमवायित्वरूपस्यैव वाच्यतया शाखयांरूपे-
नरूपत्वमित्यस्यापिप्रामाण्यापत्तिः नहितत्प्रतीतेष्कथंचिदपिप्रामाण्यं-
रूपत्वस्यव्याप्यवृत्तित्वाङ्गीकारा दितिवाच्यं मूलावच्छिन्नवृक्षवृत्ति
त्वाभावस्यैवतत्रापिविषयत्वाङ्गीकारात् अतएवं करूपताप्युक्तप्रती-
तीनामुपपद्यते यदिचोपरिमूलेवृक्षेनतत्संयोग इति प्रतीतौ मूलाव-
च्छिन्नोपरिदिगवच्छिन्नवृक्षनिरूपितवृत्तित्वाप्रसिद्धया तदभावस्य न
विषत्वसम्भवो यस्यहिवृत्तिर्नयत्रसार्वदैशिकी नसार्वकालिकी त-
न्निरूपिततद्वृत्तितायाएवसावच्छिन्नत्वस्याभ्युपेयत्वादिति मूलावच्छे-
देनोपरिदिगवच्छेदेनवृक्षेतत्संयोगाभावएवविषय इत्यव्याप्यवृत्य
भावसिद्धान्तस्य नहानिरित्युच्यते तदेदानीमस्ताचले प्राच्यां नज्यो
तिरित्यत्र प्राचीदिगवच्छिन्नैतत्कालावच्छिन्नस्यास्ताचलवृत्तित्वस्या
स्ताचलावच्छिन्नप्राचीवृत्तित्वस्यचाप्रसिद्धिः प्राचीदिगवच्छिन्ना-
स्ताचलावच्छिन्नैतत्कालवृत्तित्वस्यापिहि नसंभव स्तादृशवृत्तिमतो
ऽसम्भवादिति कालएवाभावोभ्युपगन्तव्यः। तत्कालसम्बद्धावस्ताच-
लप्राचीदिग्विशेषौच तत्कालनिष्ठाधिकरणतावच्छेदकौसम्भवत इति
कालवृत्तितावच्छेदकत्वन्देशस्यनाप्रामाणिकं यैस्त्वव्याप्यवृत्तिपदा-
र्थोनाङ्गीक्रियते तैस्तु विशेषरूपेणसंसर्गत्वमभ्युपेत्य वृत्तित्वविशेषी-
यस्वरूपसम्बन्धावच्छिन्नवृत्तित्वाभावविषयकत्वेन सर्वप्रतीतिरुपपा-
द्यत इति ॥ ० ॥

येनरूपेणेत्यादि, यत्संवन्धावच्छिन्नयद्धर्मावच्छिन्नाधिकरणता-
वन्निष्ठतत्संवन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकतद्धर्मवत्वं तेन-

सम्बन्धेनतेनरूपेणव्याप्यवृतित्वमित्यर्थः नित्यज्ञानानुयोगिकविषयि-
त्वादिनाव्याप्यवृत्तित्वसम्पत्तयेच ताद्दशाधिकरणताबन्निष्ठाभावी-
यप्रतियोगितासामान्ये यत्संवन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभया-
भाववत्वमेवाविवक्षणीयमिति ।

द्रव्यत्वस्यसमवायेनेति, घटे गुणे नद्रव्यत्वमित्यादौ गुणावच्छे-
देनघटेद्रव्यत्वाभावोनविषयः किन्तुघटेद्रव्यत्वंगुणेतदभावः घटवृत्ति-
गुणेवाद्रव्यत्वाभावः ताद्दशप्रतीतिरेववाऽप्रामाणकी प्रामाणिकी च
घटेद्रव्यत्वं नतुगुण इत्यादि र्नघटेद्रव्यत्वाभावसाधनायालम् ॥ इदा-
नींयद्द्रव्यत्वंतद्धटे नतुगुणइत्यादयः काले स्वरसनएवाभावसाधय-
न्ती तिकालिकेनाव्याप्यवृत्तित्वं नतुसमवायेनेत्याशयः ॥ ० ॥

नित्यगुणत्वादिति, गुणत्वाधिकरणे जन्ये कालिकेनकपिसंयोगा-
त्मकाभावस्यवृत्तित्वात्प्रतियोगिवैयधिकरण्योपादानं संभाव्येतेत्य-
तउक्तंनित्येति ॥ ० ॥ प्रयोजनविरहादिति, तद्विशेषणविरहेऽपि व्या-
प्तिज्ञानस्यप्रमात्वसंभवादितिशेषः ॥ ० ॥

द्रव्यत्वानातिरिक्तत्वादिति, ननूक्ताभावस्यातिरिक्तत्वेऽपि त-
त्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके विरहादतिव्याप्तिसं-
भवेऽनतिरिक्तत्वानुधावनमफलमितिचे दत्रकेचित् पारिभाषिकाव-
च्छेदकत्वघटितकल्पेऽ तिरिक्तत्वेतस्या तिव्याप्त्यप्रसक्ते रनतिरि-
क्तेति । यत्वत्रतस्यानतिरिक्तत्वेऽपि घटध्वंसाद्यात्मकाभावमादाय-
नदोषः तद्रूपभिन्नगुणत्वादित्यादावपि विषयत्वस्यजन्यत्वे तद्ध्वंसा-
त्मकाभावं विषत्वस्यातिरिक्तत्वेनित्यत्वेऽपिचतस्य तत्स्वरूपाभावं
तद्रूपभेदतद्रूपत्वप्रकारकयत्किंचिज्ज्ञानान्यतरस्यविषयत्वस्वरूपान्य-
तरसंबन्धावच्छिन्नप्रतियोगिताकाभावादिकम्वादायनदोषइतिं तत्तु-
च्छम् द्रव्यवृत्यवृत्तिधर्म्मावच्छिन्नप्रतियोगिकस्वरूपसम्बन्धेनद्र-
व्यत्वाभावसाध्यकस्थले वृत्यनियामकसम्बन्धस्यप्रतियोगितावच्छे-
दकत्वे यथाश्रुतसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वस्यै-
वविवक्षिततयो क्ताभावस्यानातिरिक्तत्वेऽतिव्याप्तिवारणायोगात् घ-
टध्वंसाद्यभावाभावादीनां साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियो-
गिताकानां केवलान्वयितयासाध्यवन्निष्ठत्वादित्याहुः । परेतु सम-
नियताभावयोर्भेदेऽपि तदधिकरणत्वमेकमेवेति हेत्वधिकरणत्वनिष्ठ-
विशेषणत्वसम्बन्धावच्छिन्नाधिकरणत्वानिरूपकत्वस्य द्रव्यत्वस्वरू-



पाभावसत्वान्नातिव्याप्तिः नचसमवायावच्छिन्नत्वस्वरूपसम्बन्धाव-
च्छिन्नत्वाभ्यामाधिकरणताभेदइतिवाच्यं व्यासज्यवृत्त्यैकावच्छेदकत्व-
पक्षेसावच्छिन्नत्वानिरवच्छिन्नत्वतत्तत्सम्बन्धावच्छिन्नत्वादीनामव्या-
प्यवृत्तित्वव दत्राप्येकस्यामेवाधिकरणतायां तत्तन्निरूपितत्वावच्छेदेन-
तत्सम्बन्धावच्छिन्नत्वस्यापिस्वीकारेणाव्याप्यवृत्तित्वाभ्युपगमादिति-
प्राहुः ॥ ऋजवस्त्वभावसाध्यकेऽतिव्याप्तिमुक्त्वा द्रव्यभिन्नत्वप्रका-
रकप्रमाविशेष्यत्वरूपभावसाध्यकेपितामाह द्रव्यभिन्नत्वप्रकारकप्र
माविशेष्यत्वाभावस्यापीतिवदन्ति ।

साध्यतावच्छेदकसम्बन्धेत्यादि, घटत्वाभावस्यकालिकेनयोऽभा-
वइत्युपलक्षण मभावाभावसाध्यकेऽपि द्रष्टव्यम् घटत्वाभावश्चस्वरूपा-
दिसम्बन्धावच्छिन्नप्रतियोगिताकः समवायादिसम्बन्धावच्छिन्नप्रति-
योगिताकस्य कालिकादिनाअव्याप्यवृत्तितया तदभावसाध्यकस्थल-
स्याप्यव्याप्यवृत्तिसाध्यकस्थलत्वादिति । तथापि साध्यतावच्छेदक-
सम्बन्धेनेत्यादि, प्रतियोगिताविशिष्टप्रतियोगित्वानवच्छेदकत्वमनव-
च्छेदकत्वान्तार्थः वैशिष्ट्यंच्च स्वतादात्म्य स्वविशिष्टप्रकारताशा-
लिग्रहत्वव्यापकप्रतिवध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारता-
वच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावदभावीयत्वो-
भयसम्बन्धेन स्ववैशिष्ट्यञ्च स्वावच्छेदकधर्मावच्छिन्नत्व स्वाव-
च्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन एवञ्चसाध्याभावस्योक्त-
स्थले घटत्वाभावरूपतया तदीयघटत्वनिष्ठप्रतियोगितावच्छेदका-
वच्छिन्नग्रहाविरोधितावच्छेदकसम्बन्धत्वस्य स्वरूपेसत्वेऽपिनक्षतिः
स्वावच्छेदकधर्म्मावच्छिन्नत्वम्विहायस्वसामानाधिकरण्यप्रवेशे व-
ह्न्यधिकरणत्वकालिकसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावान्य-
तरस्यस्वरूपेणसाध्यतायां धूमेसद्धेतौ साध्याभावप्रतियोगितास-
मानाधिकरणताद्दशप्रमेयाभावत्वावच्छिन्नप्रकारताकग्रहविरोधिताघ-
टककालिकमादायाव्याप्त्यापत्तेः नचप्रतिवध्यतायांताद्दशग्रहत्वव्या-
पकत्वासम्भवइतिवाच्यं ताद्दशप्रतिवध्यताप्रसिद्ध्यर्थंकिञ्चिद्धर्मावा-
च्छिन्नविशेष्यतानिरूपितस्वविशिष्टप्रकारतासमानाधिकरणभेदप्रति-
योगितावच्छेदकत्वन्नास्तीतिप्रतीतिसिद्धाभावरूपस्यैवव्यापकत्वस्य-
प्रवेश्यत्वात् स्वाच्छेदकावाच्छिन्नत्वञ्च स्वावच्छेदकतात्वावच्छिन्न-
प्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकं

पर्य्याप्तिकावच्छेदकताकत्व न्तेनविषयितासम्बन्धेनवह्निधूमोभयसाध्यकव्यभिचारिणि साध्याभावप्रतियोगिताविशिष्टप्रकारताकग्रहत्वव्यापकप्रतिबध्यत्वाप्रसिद्धावपिनातिव्याप्त्यापत्तिः नचप्रतियोगिताविशिष्टप्रकारत्वावच्छिन्नत्वमेवविवक्षणीयमिति वाच्यम्। कालिकसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावसाध्यकात्मत्वहेतुके प्रमेयाभावज्ञानाधिकरणत्वोभयाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबन्धकतानिरूपितां साध्याभावप्रतियोगितावच्छेदकधर्म्मावच्छिन्नप्रकारत्वावच्छिन्नामुभयवत्ताज्ञानसाधारणप्रतिबध्यतामादायाव्याप्त्यापत्तेःस्वावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशात् कालिकेनप्रमेयाद्यभाववत्ताबुद्धिप्रतिबन्धकताघटकस्वरूपसम्बन्धमादायप्रमेयाभावसाध्यकस्थलेनाव्याप्त्यापत्तिः अथघटभिन्नंकपालत्वादित्यत्र घटभेदाभावस्यघटत्वघटोभयात्मकत्व उक्तविरोधिताघटकसमवायेनघटात्मकसाध्याभावाधिकरणेकपालेहेतोर्वृत्तित्वेनाव्याप्तिरिति चेत् घटभेदाभावस्यघटत्वमात्ररूपत्वाभ्युपगमा दाधाराधेयभावानुरोधात् उभयरूपत्वेऽपि समवायेनघटत्वावगाहिनएव तादात्म्येनचघटावगाहिनएव घटभेदाभावबिषयकज्ञानस्य बिरोधितया विरोधितावच्छेदकप्रकारतावैशिष्ट्यस्य वृत्तितायाम्बिवक्षितत्वाद्वादोषस्यनसम्भवः वैशिष्ट्यञ्च स्वसमानाधिकरण्य स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेति ननुकालिकसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावसाध्यकपटाभावत्वेसद्धेतौ घटाभावाभावोघटाभाववानितिबुद्धिम्प्रति घटाभावाभावेकालिकेनघटाभावाभाव इति बुद्धेः प्रतिबन्धकतया तदवच्छेदकप्रकारतावच्छेदककालिकसम्बन्धावच्छिन्नाधेयतासम्बन्धेनसाध्याभावस्यहेत्वधिकरणवृत्तितयाऽव्याप्तिरिति चेन्न तादृशप्रतिबध्यताविशिष्टप्रकारताविशिष्टवृत्तित्वस्य विवक्षणीयत्वात् प्रतिवध्यतावैशिष्ट्यञ्च स्वावच्छेदकविशेष्यतावच्छेदकासमानाधिकरण्य स्वनिरूपितप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन प्रकारतावैशिष्ट्यञ्च प्रागुक्तसम्बन्धेन नचकालिकेनाभाववान् वन्ह्यभाववान् कालिकेनाभाववान् ह्रद इत्यस्यापिप्रतिबन्धकतया तदवच्छेदकप्रकारतामादायवन्हिमान् धूमादित्यादावव्याप्तिरिति वाच्यम ज्ञानवैशिष्ट्यानवच्छिन्नत्वेनप्रतिबन्धकत्वस्य विशेषणीयत्वात् नचैवमपिवह्न्यभावस्य कालिकेनयद्व्याप्यङ्कालिकेनतद्वत्ताबुद्धेरपिप्रतिबन्धक-



तया तदवच्छेदकवह्न्यभावनिष्ठप्रकारताविशिष्टवृत्तित्वमादायाव्याप्तितादवस्थ्यमितिवाच्यम् भ्रमानिरुपितत्वस्य प्रकारताविशेषणत्वात् यदिचोक्तदोषवारणायसामानाधिकरण्यंविहाय स्वावच्छेदकधर्म्मावच्छिन्नत्वस्यसंसर्गत्वमुच्यते। तदाप्रतियोगिताविशिष्टप्रकारत्वावच्छिन्नत्वमेववाच्य न्नतु व्यापकत्व म्प्रयोजनाभावात् नच साध्यताबच्छेदकसम्बन्धावच्छिन्नप्रकारत्वावच्छिन्नत्वमात्रम्बाच्यमिति वाच्यम्। स्वरूपेणवह्न्यधिकरणत्वसाध्यके वह्न्यधिकरणत्वाभावस्य कालिकेनयोऽभावः स्वरूपेणतद्वानिति बुद्धिम्प्रति कालिकेन वह्न्यधिकरणत्वाभाववानितिबुद्धेः प्रतिबन्धकतयाऽव्याप्तेः प्रतियोगितासामानाधिकरण्यप्रवेशेन तद्वारणसम्भवे ऽप्युक्तयुक्त्याप्रमेयस्य घटाद्यनुयोगिकस्वरूपेणसाध्यतायां सद्धेतावव्याप्तिः स्यात्। स्वावच्छेदकधर्म्मावच्छिन्नत्वप्रवेशेनतस्यवारणे ऽप्यभावस्यघटानुयोगिकस्वरूपेणसाध्यतायां सद्धेता वभावाभावस्यकालिकेनाभाववत्ताबुद्धिप्रकारतायां प्रतियोगितावच्छेदकधर्म्मावच्छिन्नत्वसत्वेनाव्याप्तिः स्यादिति प्रतियोगितावच्छेदकधर्म्मातिरिक्तधर्म्मानवच्छिन्नत्वस्यापिनिवेश्यत्वात स्वावच्छेदकसम्बन्धावच्छिन्नत्वञ्च पर्य्याप्त्यघटितमेवोपादेयम् प्रयोजनविरहादिति प्रकारतावैशिष्ट्यघटकः स्वावच्छेदकसम्बन्धावच्छिन्नत्वञ्चस्वनिरुपितसंसर्गतावच्छेदकतापर्य्याप्त्यधिकरणधर्म्मानिष्ठावच्छेदकताकसंसर्गताकत्वन्तेन स्वरूपकालिकोभयसम्बन्धेन वह्न्यभाववत्ताबुद्धेः प्रतिबन्धकत्वेन प्रकारतानिरुपितसंसर्गतावच्छेदककालिकत्वावच्छिन्नसंसर्गताकवृत्तिताया हेत्वधिकरणनिरुपिताया वह्न्यभावेस त्वेऽपि नवह्निमान्धूमादित्यत्राव्याप्तिः वृत्तितानिरूपितसंसर्गतावच्छेदकतापर्य्याप्तिश्च ननिवेश्या प्रयोजनाभावादिति ॥ ० ॥

वस्तुतोव्याप्यवृत्तित्वमत्रेत्यादि; अत्र स्वपदंसाध्यतावच्छेदकावच्छिन्नपर न्तेनात्मवृत्तित्वविशिष्टसत्तासाध्यकस्यनव्याप्यवृत्तित्वहानिः। साध्यतावच्छेदकसम्बन्धावच्छित्वञ्च साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकसंसर्गताकत्वम्। तेनात्मत्वस्यसमवायस्वकालीनद्रव्यत्वोभयसम्बन्धेनसाध्यताया मात्मानुयोगिकसमवायेनद्रव्यत्वस्यसाध्यतायाञ्च नव्याप्यवृत्तित्वहानिः। अथा-

त्रहेत्वधिकरणवृत्तित्वं सम्बन्धसामान्येनै वाभिमतम् । कथमन्यथा
सत्तावान् जातेरित्यत्र प्रतियोगिवैयधिकरण्योपादानमुक्त मेवञ्च-
हेत्वधिकरणसम्बन्धित्वप्रवेशे व्याप्यवृत्तिसाध्यकेऽसम्भवापत्त्या वृ-
त्तित्वस्यैवप्रवेशनीयतया विषयितयागगनवद्भेदसाध्यकव्यभिचारि-
णि गगनस्वरूपसाध्याभावस्यहेत्वधिकरणवृत्तित्वविरहेणाभावान्त-
रमादायातिव्याप्ति र्नचसाध्यतावच्छेदकतदन्यकिञ्चिदन्यतराविशि-
ष्टाभावमादायदोषवारणसम्भवइतिवाच्यम् उक्तभेदस्यस्वरूपतादृश-
भेदत्वावच्छिन्नाप्रतियोगिकस्ववृत्तिवाच्यत्वान्यतरसम्बन्धेनसाध्यता-
तांव्यभिचारिणितत्सम्भवादितिचेन्न हेत्वधिकरणनिरूपितसम्ब-
न्धित्वे साध्याधिकरणनिरूपितत्ववृत्त्यनियामकसम्बन्धावच्छिन्नत्वो-
भयाभाववत्वस्यविशेषणीयत्वा दुक्तव्यभिचारिणिहेत्वधिकरणनिरू-
पितसाध्याभावनिष्ठसम्बन्धितायां साध्यवन्निरूपितत्वविरहेणोभया-
भावसत्वान्नातिव्याप्तिः सद्धेतौचहेत्वधिकरणनिरूपितवृत्त्यनियामक-
सम्बन्धावच्छिन्नसम्बन्धितायामुभयस्यैवसत्वेननाव्याप्तिरिति ।

तस्यसम्बन्धविशेषानियन्त्रितत्वादिति, तस्य, सर्वथाव्याप्यवृ-
त्तित्वस्येत्यर्थः इदञ्च तल्लाभार्थतायांहेतुः तथाचस्वाधिकरणेयस्या-
भावः कथञ्चिदपिनवर्त्ततेसएवयतः सर्वथाव्याप्यवृत्तित्वेनव्यवह्रि-
यते ऽतस्सर्वथेतिपदसमभिव्याहृतव्याप्यवृत्तिपदादनुपदोक्तादृशा-
प्रतियोगित्वमेवव्याप्यवृत्तित्वम्बोध्यतइतिभावः । यद्वोक्तपञ्चम्यन्त-
स्यतेनेत्यत्रान्वयः तथाचयतउक्तव्याप्यवृत्तित्वस्यवृत्तित्वांशेनसम्ब-
न्धविशेषावच्छिन्नत्वमतोव्यभिचारित्वादीनांवृत्त्यनियामकत्वेनैवनात्म-
त्वादेर्व्याप्यवृत्तित्वहानि रन्यथातत्सम्बन्धानांवृत्तिनियामकत्वेऽप्या-
त्मत्वादीनांव्याप्यवृत्तित्वंस्यादेवेतिभावः । अथवानवृत्तिनियामकः,
नवृत्तिनियामकोभ्युपेयः अत्रैवोक्तपञ्चम्यन्तस्यान्वयः नचोक्तसम्ब-
न्धस्यवृत्तिनियामकत्वएवतत्प्रतिषेधोयुज्यतइतिवाच्य मिहहेतावु-
पाधिरित्यादिनाव्यवहारेणव्यभिचारित्वस्यवृत्तिनियामकत्वस्याभ्युपे-
तत्वा न्नचोक्तव्यवहारस्यकागतिरितिवाच्यं षष्ठ्यर्थेऽपिसप्तमीप्रयो-
गस्यशास्त्रेस्वीकरणीयत्वा दृश्यतेचैवमन्यत्रापि भ्रमतिगगनेरात्रौरा-
त्रावखण्डकलश्शशीत्यादौ अतएवनवृत्तिनियामकइत्यस्यानुवादत्वे
वृत्यनियामकघटितस्यैवव्यभिचारित्वस्यवृत्तिनियामकत्वप्राप्त्या ज-
न्यत्वाभावादीनांव्याप्यवृत्तित्वमनुभवसिद्धमवलुप्यतेत्यपिनिरस्तमि-



ति क्वचिच्चतस्यसम्बन्धविशेषनियन्त्रितत्वादितिपाठः, तत्रस्वाधि-
करणत्वांशइतिशेषः, पञ्चम्यन्तस्यनव्याप्यवृत्तित्वहानिरित्यत्रान्वयः
तेनादिपदग्राह्यनित्यज्ञानादीनांविषयितयाधिकरणे कालिकेनात्मत्वा-
धिकरणे स्वाभावस्यसत्वेऽपि नव्याप्यवृत्तित्वहानिरित्यर्थइति ॥

नच विशिष्टसत्वस्येत्यादि, ननु व्यभिचारिणस्सर्वलक्षणालक्ष्य-
तयाकथन्नातिव्याप्तिरिति चेदत्र केचिदव्याप्यवृत्तिसाध्यकस्थली-
यलक्षणेसाध्यतावच्छेदकेऽव्याप्यवृत्तितावच्छेदकत्वस्याविशेषणतया-
विशिष्टसत्तात्वेतद्विरहेणनातिव्याप्तिरित्याशय इति वदन्ति तन्नाति
चारु अभ्रान्तस्यव्यभिचारिलिङ्गकानुमितिप्रसङ्गरूपवक्ष्यमाणदो-
षस्यासङ्गते स्साध्यतावच्छेदकस्याव्याप्यवृत्तितानवच्छेदकत्वात्
व्यभिचारग्रहकाले ऽनुमितिप्रसङ्गमात्रस्यवक्ष्यमाणतात्पर्य्यविषयत्वेतू
क्तोत्तरस्यापि सम्भवएवेति । वस्तुतस्तुप्रकृतसाध्यहेत्वादेरनुगत-
त्वेनाननुगत एव व्याप्यत्वव्यवहारप्रयोजकः तत्रव्याप्यवृत्तितत्त-
त्साध्यनिरूपितव्याप्यत्वव्यवहारे लाघवेनप्रतियोगिवैयधिकरण्या-
विशेषितस्वोद्देश्यतावच्छेदकावच्छिन्नसमानाधिकरणाभावप्रतियोगि-
तानवच्छेदकतत्तद्धर्मावच्छिन्नसामानाधिकरण्यमेव प्रयोजकमिति
नजातित्वावच्छिन्नेद्रव्यत्वत्वावच्छिन्नइव विशिष्टसत्वनिरूपितोव्या-
प्यत्वव्यवहारः प्रयोजकस्योक्तसामानाधिकरण्यस्य तत्र सत्वा त्स-
तश्चप्रतियोगिवैयधिकरण्यघटितसामानाधिकरण्यस्यतदप्रयोजकत्वा-
दित्यत्रतात्पर्य्यम् ।

जातौ विशिष्टसत्त्वव्यभिचारग्रहेति, विशिष्टसत्तात्ववृत्तिस्वप्रति-
योगितावच्छेदकावच्छिन्नानधिकरणजातिमद्वृत्त्यभावप्रतियोगिताव
च्छेदकत्वघटकत्वग्रह इत्यर्थः इदञ्चेष्टापत्तिवारणायोक्तम् दोषताचा-
भ्रान्तस्य व्यभिचारिलिङ्गकानुमितित्वेनैवेति बोध्यम् ॥ अथव्या-
प्यत्वव्यवहारइवव्याप्यवृत्तिसाध्यकानुमितावपिप्रतियोगिवैयधिक-
रण्याघटितव्याप्तिज्ञानस्यैवलाघवेन कारणत्वकल्पना त्कथम्प्रतियो-
गिवैयधिकरण्यघटितव्याप्तिज्ञानादनुमितिप्रसङ्गइति चेन्न व्याप्यवृ-
त्तिसाध्यकस्थलेऽप्यव्याप्यवृत्तित्वग्रहदशायामनुमित्युपपत्तये प्रति-
योगिवैयधिकरण्यघटितव्याप्तिज्ञानहेतुतायाव्याप्तिग्रहग्रन्थेवक्ष्यमाण-
तया तत्काल आपत्तिसम्भवात् नचैवन्नोपादेयञ्चेत्यादिग्रन्थासङ्ग-
तिरिति वाच्यम् यथासल्लिङ्गकानुमितेर्भ्रान्तमात्रपुरुषीयतायां अ-

सिद्धान्ततया तद्वारणायाव्याप्यवृत्तिसाध्यकानुमितौ प्रतियोगिवैय-
धिकरण्यघटितव्याप्तिज्ञानस्यैवहेतुत्व ञ्चतथाव्याप्यवृत्तिसाध्यके त-
त्र प्रतियोगिवैयधिकरण्याघटितव्याप्तिज्ञानस्यापि प्रमात्वसम्भवा
दित्याशयाद्व्यवहारप्रयोजकनिर्वचनपरत्वाद्वेति ।

व्याप्यत्वव्यवहारप्रसङ्गरूपसार्वत्रिकातिप्रसङ्गपदार्थम्प्रकृतेसङ्गम-
तुमाह विशिष्टसत्त्वस्याप्युक्तेति । अतिरिक्तामत इति, विशे-
ष्यसम्बन्धविशेषणावगाहित्वरूपप्रमात्वस्यापारिभाषिकत्वसम्पत्त्य-
र्थम्विशिष्टातिरिक्तादरः । यद्वातिरिक्ताधिकरणत्वकल्पनापेक्षया
विशिष्टातिरिक्ताकल्पनायायुक्तत्वात्तदादरः नचतत्राधिकरणत्वस्य-
क्लृप्तद्रव्यत्वाधिकरणतारूपत्नगौरवमिति वाच्यम् । निरूपकत्वस्यो-
भयधर्म्मावच्छिन्नस्यातिरिक्तस्यतथापि प्रसङ्गात् । तत्तत्क्षणविशिष्ट-
सत्वानिरूपितानन्ताधिकरणत्वस्याप्यतिरिक्तस्यैवकल्पनीयतयागौर-
वाच्चेति बोध्यम् ।

विशिष्टसत्वसाध्यकइति, इदमुपलक्षणं भूतत्वमूर्त्तत्वयोर्व्या-
प्यवृत्तिगुणात्मकत्वे साङ्कर्येणतयोर्जातित्ववारणन्नघटते स्वाश्रयेऽसा-
र्वद्रिकवृत्तेर्जातित्वस्यैवाप्रसक्तेः तस्मात्स्पर्शवदवृत्तित्वेसतिशब्दवदवृ-
त्तिधर्म्मशून्यत्व म्विशेषगुणवद्वृत्त्यात्मावृत्तिधर्मवत्वम्वाभूतत्व म-
वच्छिन्नपरिमाणवेगवदाद्यवृत्तिधर्म्मशून्यत्वं वेगवद्वृत्तिगगनावृत्ति-
धर्म्मसमवायित्वम्वा मूर्त्तत्वमित्यवश्यमभ्युपेयमिति भूतत्वमूर्तत्वयोर-
पिनव्याप्यवृत्तित्वसम्भवइति ॥

दीधितावुभयत्वन्नाविशिष्टत्वादतिरिक्तमिति, नचनञ्द्वयोक्ति-
र्विफलेतिवाच्यं तथासत्युभयत्वमात्रस्य विशिष्टत्वातिरिक्तत्वाला-
भात् तदुक्तौचाभावान्वयस्यानुयोगितावच्छेदकावच्छेद्यत्वनियमेनत-
ल्लाभादिति ॥

वृत्तिमतीति, गगनादिहेतोरव्याप्यत्वस्यसाध्यासामानाधिकर-
ण्याधीनत्वादिदमुक्तं ।

अनवस्थाभयेनेत्यादिरिति, पटाभावभेदस्यातिरिक्तत्वे भेदभेद-
स्यतद्भेदस्याप्यतिरिक्तत्वमित्यनवस्थापत्तिरित्यर्थः यद्यप्येवमपि प्र-
तियोगित्वादिकल्पनानवस्थातिस्तदवस्था तथाप्यनन्तभेदाकल्प-
नालाघवम्भवत्येवेति–नचैम्पटाभावेऽपि पटाभावभेदसत्वप्रसङ्ग
तदभिन्नस्यघटाभावस्यसत्वादितिवाच्यं घटाभावस्यतादात्म्येनैव प-



टाद्यभावभेदव्यवहारप्रयोजकत्वाभ्युपगमात् अभावप्रतियोगिकाभावा-
धिकरणकाभावस्याधिकरणात्मकत्वेऽपि नाभावात्यन्ताभावोऽधि-
करणात्मा अनवस्थितेरभावात् तथाहिसमानाधिकरणसम्बन्धावच्छि-
न्नप्रतियोगिताकाभावस्यस्वरूपेणाभावःप्रथमाभावः प्रथमाभावप्रतियो-
ग्यात्मा तदभावश्चप्रथमाभावः व्यधिकरणसम्बन्धावच्छिन्नप्रतियो-
गिताकाभावस्यस्वरूपेणाभावोऽसिद्धएवा भावस्यव्यधिकरणसम्ब-
न्धावच्छिन्नप्रतियोगिताकसर्वोप्यभावोगगनाभावएव नित्याभावस्य-
कालिकेनसर्वोभावःकालिकेनघटत्वाद्यभावात्मकएव स्वरूपेणतद-
भावश्चतत्प्रतियोगिरूप एवम्विशेषरूपेणसंसर्गताचनस्वीक्रियतइत्य-
धिकरणात्मकताचाभावभेदमात्रस्यैवेदानींग्रन्थकर्तुरभिमता अतए-
वाभावाभावस्यप्रतियोनिरूपतामेवावलम्ब्य सम्प्रदायइत्यस्वरसइ-
त्यादिनात्रास्वरसम्वक्ष्यति । एवञ्चघटाभावस्यकालिकसम्बन्धाव-
वच्छिन्नपटाभावात्मकतयात्यन्ताभावत्वनिरूपितपटाभावनिष्ठप्रतियो-
गितावच्छेदकावच्छिन्नसमानाधिकरणत्वादव्याप्तितादवस्थ्यमितिनि-
रस्तम् तादृशाभावस्यघटाभावानात्मकत्वा त्सम्प्रदायइत्यस्वरस-
इत्यादिनावक्ष्यमाणदोषतुल्यत्वेनेष्टत्वाच्चेति ॥ परेतुकालिकसम्ब-
न्धावच्छिन्नपटाभावाभावस्वनिरूपितप्रतियोगितावारणाय स्वप्रति-
योगिमत्वग्रहविरोधिताघटकसम्बन्धावच्छिन्नहेत्वधिकरणनिरूपितवृ-
त्तितावच्छेदकत्वमत्यन्ताभावत्वरूपानुयोगितांविशेषणन्देय न्तथा-
चोक्तात्यन्ताभावत्वस्यतादृशावच्छेदकत्वविरहान्नदोषः यत्त्वत्यन्ताभाव-
त्वनिरूपितप्रतियोगितायांसाध्यवच्छेदकसम्बन्धावच्छिन्नत्वम्विशे-
षण ञ्चैवमेवभेदत्वनिरूपितप्रतियोगितावारणेनात्यन्ताभावत्वनिरू-
पितत्वम्व्यर्थमितिवाच्यं स्वरूपकालिकोभयसम्बन्धावच्छिन्नप्रतियो-
गिताकाभावमादायदोषवारणाय साध्यतावच्छेदकसम्बन्धातिरिक्त-
सम्बन्धानवच्छिन्नत्वरूपस्यैवतस्यवाच्यतया भेदत्वनिरूपितप्रति-
योगितायांसम्बन्धानवच्छिन्नत्वपक्षेतत्सार्थक्यसम्भवादिति तन्तुच्छं
कालिकेनघटसाध्यकतत्क्रियात्वेसद्धेतावव्याप्त्यापत्तेः तत्रात्यन्ताभा-
वत्वनिरूपितप्रतियोगितायाः कालिकसम्बन्धावच्छिन्नाया गगना-
भावनिष्ठाया स्साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वादितिवदन्ति तन्न
घटभिन्नंनित्यत्वादित्यत्राव्याप्तितादवस्थ्या देवंघटाभावस्यपूर्वक्षण-
विशिष्टपटाभावाभावस्यचैकतया घटाभावनिरूपिताया हेत्वधिकर-

णनिरूपितवृत्तितावच्छेदकताद्दशाभावत्वनिरूपितायाः प्रतियोगिता-
या अवच्छेदकीभूतधर्म्मावच्छिन्नाधिकरणत्वस्यैवहेत्वाधिकरणेसत्वे-
नाव्याप्तितादवस्थ्यात् नचापरक्षणावच्छिन्नमात्रवृत्तेरुक्ताभावस्यघ-
टाभावनिष्ठस्यकथंघटाभावात्मकतेतिवाच्यं घटभेदस्यस्वरूपपटत्वा-
वच्छिन्नप्रतियोगित्वान्यतरसम्बन्धेनसाध्यतायांसद्धेतौपटाभावत्वेऽ-
व्याप्तेः पटाभावान्याभावस्यैवप्रतियोगिव्यधिकरणतयातस्यचपूर्वक्ष-
णावच्छिन्नपटाभावत्वाभावेनस्वनिष्ठेनाभिन्नतयाताद्दशाभावत्वस्य-
चहेत्वधिकरणनिरूपितवृत्तितावच्छेदकत्वेनतन्निरूपितप्रतियोगित्वमा-
दायाव्याप्तेरुद्धारासम्भवादिति ॥

अग्रेविवक्षणीयस्येति, ननुवह्निमान्धूमादित्यत्राप्यव्याप्तिस्सम्भ-
वत्येव घटाभावस्यस्वनिष्ठेनवह्नितदभावाऽननुयोगिकस्वरूपेणपटा-
भाववद्भिन्नभेदेनघटाभावत्ववद्भिन्नभेदेनचैकतयातत्प्रतियोगिताव-
च्छेदकावच्छिन्नस्यवह्नेस्संयोगेनाधिकरणत्वस्यपर्वतेसत्वादितिचेन्ना
भावमात्रप्रतियोगिकाभावस्याधिकरणत्वरूपत्वाभ्युपगमात् । वि-
शेषरूपेणससंर्गत्वाभ्युपगमाच्च । यद्वाविषयितयारूपत्ववदभावमा-
दायाव्याप्तिवारणाय साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नप्र-
तियोगितावच्छेदकनिष्ठावच्छेदकताकनिरूपकताकाधिकरणतावदन्य-
त्वस्यैववाच्यतयानोक्तदोषसम्भवः नचवह्नित्वप्रतियोगिकसमवाय-
स्यसाध्यतावच्छेदकताघटकसम्बन्धत्वेऽव्याप्तिवारणाय पारिभाषि-
कस्यैवसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्यवाच्यत्वा दु-
क्तदोषतादवस्थ्यमितिवाच्यं साध्यतावच्छेदकताघटकसम्बन्धाव-
च्छिन्नावच्छेदकताकनिरूपकताकाधिकरणत्वीयस्वरूपसम्बन्धावच्छिन्न-
प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वाभावस्यैवाविवक्षितत्वात्पा-
रिभाषिकतद्विवक्षायाम्प्रयोजनाभावा न्नचैवमपिवह्नित्वाधिकर-
णत्वविशिष्टस्यसाध्यतायान्तथाप्यव्याप्तिरितिवाच्यं प्रतियोगितायां
साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेस्वप्रतियोगितावच्छेदकसम्ब-
न्धेनप्रतियोगिवैयधिकरण्यस्यसाध्यावच्छेदकसम्बन्धेनप्रतियोगिवैय-
धिकरण्यपर्यवसायितया ग्रेविवक्षणीयेत्यादेरत्रैवतात्पर्य्येण संयोगेन-
साध्यतास्थलेप्रतियोगितायांभेदत्वनिरूपितायांसाध्यतावच्छेदकस-
म्बन्धावच्छिन्नत्वविरहेणदोषासम्भवादित्यन्येप्रलपन्ति तन्नसाधु
साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्यभावरूपत्वे भेदत्वनिरूपित-



प्रतियोगित्वमादायदोषासम्भवेना त्यन्ताभावत्वनिरूपितत्वस्यवैय-
र्थ्यापत्तेः अभावरूपत्वेच वह्नित्वाधिकरणत्वविशिष्टसाध्यकेपिदो-
षतादवस्थ्यात् अव्याप्यवृत्त्यधिकरणतायाअव्याप्यवृत्तित्वे ताद्दशा-
धिकरणत्वाभावस्यविवक्षितुमशक्यत्वा च्छेदस्यवह्नित्वप्रतियोगिक-
समवायेनवह्नित्वविशिष्टसाध्यकस्थलेऽप्रसिद्धत्वात् अवच्छेदकता-
यांसाध्यतावच्छेदकनिष्ठत्वस्यनिरूपकत्वेसाध्यतावच्छेदकसम्बन्धा-
वच्छिन्नत्वस्यविशेषणत्वे घटभिन्नकपालत्वादित्यादावपिघटभेदमा-
दायलक्षणसम्भवाच्चेति ॥ ० ॥

अभावसाध्यकाव्याप्तितादवस्थ्यमिति, यद्यपिपूर्वक्षणविशिष्टघ-
टाभावाभावसाध्यकधूमे घटाभावस्यप्रतियोगिव्यधिकरणस्यसाध्या-
भावात्मकत्वेनसाध्यतावच्छेदकेतत्प्रतियोगितावच्छेदकत्वनिवन्धना-
प्यव्याप्तिःप्रदर्शयितुमुचिता तथापिप्रतियोगिव्यधिकरणाभावप्रसि-
द्धावेवोक्तरीत्याऽव्याप्तिस्सम्भवति तत्प्रसिद्धिश्चनकथञ्चिदप्येतत्क-
ल्पइतितदुपेक्षाकृता ॥

नचदैशिकेत्यादि, अथदैशिकविशेषणतयागोध्वंसविरोधिनोःस-
मवायसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभवयो स्साध्यतावच्छे-
दकसम्बन्धावच्छिन्नप्रतियोगिताकत्वविरहा त्ताद्दशप्रतियोगिताक-
स्यकालिकसम्बन्धावच्छिन्नगवात्यन्ताभावस्यलक्षणघटकस्यप्राचांम-
तेकालिकसन्बन्धावच्छिन्नध्वंसाद्यभावात्मकत्वेन स्वप्रतियोगितावच्छे-
दककालिकेनस्वप्रतियोगितावच्छेदकावच्छिन्नध्वंसविरोधित्वसम्भवा
त्साध्यतावच्छेदकसम्बन्धेनप्रतियोगिवैयधिकरण्यघटितकल्पेसमवा-
यसम्बन्धावच्छिन्नगवाभावस्यप्रतियोगिवैयधिकरण्यस्यैवासत्वेनत-
स्यकालावृत्तित्वसम्पत्तयेस्वरूपेणगोध्वंससत्वोपपादानस्यव्यर्थत्वाच्छे-
दमसङ्गतमितिचे न्मैवं सामान्यतोहिस्वसत्तायानस्वप्रतियोगिता-
वच्छेदकसम्बन्धेनस्वप्रतियोगितावच्छेदकावच्छिन्नविरोधित्वं तथा-
सतिगगनाभावस्यकेवलान्वयित्वानुपपत्तेः कालिकसम्बन्धावच्छिन्न-
स्वाभावस्यापिस्वप्रतियोगितावच्छेदकावच्छिन्नत्वादिति तत्त-
दभावत्वेनस्वसत्तायां तत्तदभावत्वनिरूपितप्रतियोगितावच्छेद-
कसम्बन्धेनतन्निरूपितप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वस्यै-
वविरोधित्वम्वाच्य न्तथाचगवात्यन्ताभावत्वेनसत्तायांकालिके-
नगोध्वंसवत्वस्यनविरोधित्वमुक्तविरोधितावच्छेदकरूपानाक्रान्तत्वा-

त् तत्तत्प्रतियोगिकाभावत्वेन स्वसत्तायां तत्तत्प्रतियोगिकध्वंस-
स्यातिरिक्तविरोधित्वञ्चनकालिकेनकपालेपिसमवायेनगवात्यन्ताभा-
वासत्वप्रसङ्गा दितिस्वरूपेणैवतस्यवाच्यतया दैशिकविशेष-
णतयाकालेतत्सत्वएवगवात्यन्ताभावस्यासत्वमुपपद्यतइतिनासंगतिः
नचोक्तविरोधितायांस्वरूपसम्बन्धावच्छिन्नगवात्यन्ताभावस्यगोध्वं-
सविरोधित्ववारणाय प्रतियोगितायांसम्बन्धविशेषावच्छिन्नत्वस्य-
प्रवेशनीयतया समवायादिसम्बन्धावच्छिन्नगवात्यन्ताभावस्व-
रूपेणतस्यविरोधित्वेपि कालिकसम्बन्धावच्छिन्नाभावकालिकेनवि-
रोधित्वे नक्षतिरितिवाच्यं लाघवानुरोधेनकेवलान्वयिभिन्नत्वस्यैवत
त्रप्रवेश्यत्वात् भट्टाचार्य्येणकालिकेनध्वंसविरोधित्वप्रतिपादनञ्च तत्त-
त्प्रतियोगिकत्वविशिष्टाभावत्वेनस्वसत्ताया स्तत्तत्प्रतियोगिनेवप्रति-
योगितावच्छेदकसम्बन्धेनतत्तत्प्रतियोगिकध्वंसप्रागभावाभ्यामपिप्र
तियोगिभ्यामनुभवानुरोधेनविरोधित्वमादृत्येतिबोध्यम् ॥ नचयुज्यते-
चायमेवपक्षो ऽन्यथास्वरूपेणध्वंसासत्वनिबन्धनपूर्वपक्षस्यस्वरूपेण-
तत्सत्वप्रतिपादनेनैवसमाहिततया समवायादिसम्बन्धावच्छिन्नप्र-
तियोगिताकस्य तेनसम्बन्धेनकालावृत्तिजन्याभावस्यापिकाला-
वृत्तित्वप्रसंगादितिवाच्य मिदानीन्तदाशङ्कनस्यकालिकसम्बन्धाव-
च्छिन्नगवात्यन्ताभावस्यकालावृत्तित्वप्रसङ्गेनोत्तरग्रन्थप्रतिपाद्येनस-
मानत्वात् किञ्चिदग्रेस्वरूपेणध्वंससत्वङ्कालेप्रतिपादितवतोभट्टाचा-
र्य्यस्यग्रन्थेप्युक्तपर्य्यनुयोगस्यसमानत्वाच्च नचैतदस्वरसेनैवाथवेत्या-
दिना प्रतियोगिवैयधिकरण्यघटितकल्पाभिप्रायकत्वंसंसर्गाभावमा-
त्रोक्तावपीत्यादिग्रन्थस्यवक्ष्यतीतिवाच्य मथवेत्यादावेवनिर्भरत्वव-
र्णने ऽथयदेत्यादिदीधितिशङ्काग्रन्थस्यदैशिकविशेषणतयावृत्तित्वघ-
टितलक्षणाभिप्रायकतायावर्णिततया शङ्कोत्तरग्रन्थस्यभिन्नालम्बन-
त्वापत्त्यान्यूनतापत्तेः अथाथवेत्यादिग्रन्थस्यसम्यक्पर्य्यालोचनेऽथ-
यदेत्यादिपूर्वपक्षाशयस्यसंसर्गाभावमात्रोक्तावपीतिमध्यमपक्षाशय·
स्यच तत्रैवप्रकाशमानतया तस्यसंसर्गाभावमात्रोक्तावपीतिमध्यम-
पक्षव्याख्योक्तस्वरूपसम्बन्धेनध्वंसवृत्तित्वकल्पापेक्षया नकल्पान्तरत्व
मपित्वथयदेत्यादिग्रन्थसमुदितव्याख्यापेक्षयैवेतिनन्यूनतावसरः अ-
तएवाथयदेत्याद्याशङ्कायाःप्रतियोगिवैयधिकरण्याघटितकल्पाभिप्राय·
कउत्तरग्रन्थे तच्छून्येचेत्यादिप्रतियोगिवैयधिकरण्यसद्भावप्रतिपा·



दनग्रन्थासङ्गतिरपिनेतिचे दस्त्वेतग्रन्थस्यातिरमणीयत्व न्तथापिजग·
दीशग्रन्थस्यायुक्तताचनप्राप्ता भवतिचसैवपरिहरणीयेति परिहृते·
दानींतदाशङ्कनेत्यादिनाअतएवेत्यादिनानुपदोक्तासङ्गतिश्चपरिहरि·
ष्यतइत्यलम् ॥ ० ॥

विरोधाभावादिति, ध्वंसस्य विशेषणतयाप्रतियोगिसमवायिनि·
यतत्वा त्कालस्यातथात्वादिति भावः।

भूतलादिदेशस्येवेति, भूतलेघटोनष्ट इत्यादि प्रतीतेः कालिक·
विशेषणत्वावगाहित्वस्य जलेघटोनष्टइत्यादिप्रतीत्यापत्तेर्वक्तुमश·
क्यत्वा द्विशेषणत्वस्यदैशिकस्य तद्विषयतायावाच्यतया प्रतियो·
ग्यसमवायिनिभूतलेयथाध्वंसस्यदैशिकविशेषणत्वं संसर्गस्तथेत्यर्थः॥

कालस्यापीति, नचेदानींघटइत्यत्रे वेदानींघटोनष्ट इत्यत्रापिका·
लिकविशेषणतैवास्तुसंसर्गो दैशिकसम्बन्धस्वीकारेमानाभाव इति
वाच्य माश्रयनाशाधीनद्रव्यगुणादिनाशस्यप्रत्यक्षतोपपत्तये कालेदै·
शिकविशेषणत्वस्यावश्यंस्वीकरणीयत्वा दिन्द्रियसम्बद्धकालविशेष·
णतामात्रस्य तत्र सन्निकर्षत्वसम्भवान्नहितत्रकालिकविशेषणत्व·
स्य सन्निकर्षत्वसम्भव स्तथासतिकालपरिमाणाद्यभावस्यापि का·
लेप्रत्यक्षापत्तेः अथकालानुयोगिकविशेषणताकालिकीत्युच्यते के·
यन्तदतिरिक्ता कालानुयोगिक्यापिदैशिकाविशेषणतेत्युच्यतइतिचेदु·
च्यते विशेषणताहित्रयी इदानींघटइति प्रतीतौभासमानोपाध्यव·
च्छिन्नकालानुयोगिकीकालिकी प्राच्यांघट इत्यादिप्रतीतौभासमानो·
पाधिविशेषावच्छिन्नादिगनुयोगिकीदिक्कृता स्वासाधारणधर्म्माव·
च्छिन्नानुयोगिकीदैशिकी कालिकदैशिकविशेषणतयोश्चकालानुयो·
गिकयोरपिभेदःप्रतीयतएव यदिदानींसमवायसम्बन्धावच्छिन्नकाल·
परिमाणाभावइतिजायते कालेतादृशाभाव इति तुनजायत इति—

शब्दानित्यतायामिति, नचप्रतियोगियोग्यत्वस्यतन्त्रत्वे वायुस्प·
र्शध्वंसोपि प्रत्यक्षः स्यादितिवाच्य माश्रयनाशजन्यस्यतस्यग्राहके·
न्द्रियसन्निकर्षाभावादिति शब्दानित्यताचिन्तामणेरालोके ग्राहकेत्युप·
लक्षण ङ्कालेगृह्यतएवेतीष्टापत्तिरपिद्रष्टव्या नचसमयेऽपि किञ्चिद्दे·
शावच्छेदेनग्राह्यः अत्रैवासमवायिनोपितद्देशत्वसम्भवादितिग्रन्थेन प·
क्षधरमिश्रैरुक्त इतिद्रष्टव्यम् ॥

तथापिप्रतियोगिवैयाधिकरण्याघटितस्येति, इदञ्चनप्रतियोगिवै·

यधिकरण्यघटितेतिव्याप्त्यभावाभिप्रायकं किन्तुप्रलयस्यगोध्वंस-
वत्वेनगवान्यन्ताभावानधिकरणत्वादितिदीधितिग्रन्थसङ्गमनार्थं त-
स्यप्रतियोगिवैयधिकरण्यघटितातिव्याप्त्यभिप्रायकत्वे ध्वसंरूपप्रति-
योगिसत्वमात्रमुच्यते, तद्धेतुकगवात्यन्ताभावानधिकरणत्वप्रतिपाद-
नमफलंस्यात्तत्र एवञ्च प्रतियोगिवैयधिकरण्यघटितेप्यतिव्याप्तिस-
म्भवेतदुपेक्षानिरर्थकेतिनिरस्तम् नच प्रतियोगिवैयधिकरण्यघटिते-
तिव्याप्तेः सम्भवएवेनेति वाच्यं गवात्यन्ताभावप्रतियोगिध्वंसाधिकर-
णत्वस्यैवहेत्वधिकरणेसत्वात् इत्थमेवातिव्याप्तिरथवेत्यादिनाग्रन्थेनभ-
ट्टाचार्येण प्रतिप्रपादिता नचस्वप्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य-
हेत्वधिकरणवृत्तित्वघटिते प्रतियोगिवैयधिकरण्यघटितेपि गवात्यन्ता-
भावस्यप्रलयावृत्तित्वप्रयुक्तएवातिव्याप्तिसम्भवः तस्यस्वप्रतियोग्यन-
धिकरणात्मादिवृत्तित्वात् अवश्यञ्चात्रहेत्वधिकरणवृत्तित्वंसम्बन्धविशे-
षेण वाच्यम् अन्यथागुणवृत्तेरपिकपिसंयोगाभावस्यकालिकेनवृक्षवृत्ति-
त्वसम्भवादिति प्रतियोगिवैयधिकरण्यघटितलक्षणातिव्याप्तिपरताप-
रित्यागोनोचितइति वाच्यम् स्वयंप्रतियोग्यनाधिकरणहेत्वाधिकरण-
वृत्तित्वस्यैवनिष्कर्षितत्वेनतत्रवृत्तित्वेसम्बन्धविशषावच्छिन्नत्वानि-
वेशस्यनिष्प्रयोजनतयाऽनिव्याप्तिसम्पत्यर्थंगवात्यन्ताभावानधिकरण-
त्वप्रतिपादनमफलंस्यादिति तत्परतापरित्यागस्यैवोचितत्वात् य-
द्यापाततस्तदुक्तार्थावलम्बनेनापितद्ग्रन्थव्याख्याभवत्युचिता तदा-
प्रतियोगिवैयाधिकरण्याघटितस्येत्याद्युक्तिरुपलक्षणविधयेतिबोध्यम् ॥
नच शङ्काग्रन्थस्य प्रतियोगिवैयाधिकरण्यघटितकल्पाभिप्रायकत्वेत-
च्छून्येत्याद्युत्तरग्रन्थासङ्गतिरिति वाच्यम् प्राचीनमतखण्डनेनव्या-
प्यवृत्तिसाध्यकस्थलीयलक्षणातिव्याप्तिवारणेपि प्रतियोग्यसामा-
नाधिकरण्यघटितकल्पेकथंतद्वारणमित्याशङ्कायान्तद्ग्रन्थावतार-
णस्यवक्ष्यमाणत्वात् । वस्तुतस्तुकालेतच्छून्येसतिप्रतियोग्यनधिक-
रणकालवृत्तित्वादित्यर्थे हेतुसमानाधिकरणत्वमात्रपर्यवसायि-
त्वात् तथाहि कालस्यगोशून्यत्वेभवतिप्रतियोग्यनधिकरणत्वम् ध्वं-
सादीनामप्रतियोगित्वात् यतः प्रतियोग्यनधिकरणत्वमतो भावाहे-
त्वाधिकरणकालवृत्तिरित्येवव्याख्येयम् ॥ अन्यथा प्रतियोगिवैधि-
करण्यघटितकल्पातिव्याप्तिवारकत्वाभिप्रायकत्वेपि कालस्यतदन-
धिकरणत्वादित्यस्यैवबक्तुमुचितत्वा त्प्रतियोग्यसामानाधिकरण्य-



घटितकल्पाभिप्रायकत्वे प्रतियोग्यसमानाधिकरणत्वादित्येवब्रूयादि-
ति । केचित्तु स्वप्रतियोग्याधिकरणावृत्तित्वरूपप्रतियोग्यसामाना-
धिकरण्यघटिते घटाद्यभावस्यतादृशावृत्तित्वसम्पत्यर्थम् वृत्तित्व-
स्यसम्बन्धाविशेषेणवाच्यतया गवात्यन्ताभावस्यनासंग्रहइति तत्क-
ल्पोपेक्षाभवत्युचितेतिप्रलपन्ति तन्न संयोगसाध्यकातिव्याप्त्यातद-
र्थस्यपरित्यक्तत्वेनतद्विषयत्वमुक्तग्रन्थस्याङ्गीकृत्यसमाधानस्यानुचि-
तत्वात् । अन्येतु प्रतियोगितावच्छेदकसम्बन्धेनप्रतियोग्यनधिकर-
णत्वकल्पेनातिव्याप्तिः अत्यन्ताभावनिरूपितध्वंसनिष्ठप्रतियोगिता-
यांस्वरूपसम्बन्धावच्छिन्नत्वस्यैवानुमितिग्रन्थेप्रतिपादिततया ध्वंस-
निष्ठप्रतियोगितायाम् साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविरहादि-
तिवदन्ति तदप्यसत् प्रतियोगिवैयधिकरण्यघटितेकस्मिंश्चिदपिक-
ल्पेऽतिव्याप्तिसम्भवेप्रतियोगिवैयधिकरण्यघटितकल्पातिव्याप्त्युपे-
क्षाकथंकृतेत्येवंपूर्वपक्षस्यासमाहितत्वात् किमुसाध्यतावच्छेद-
कसम्बन्धेनप्रतियोग्यनधिकरणत्वघटितेसिद्धान्तकल्पे । यत्त्वभा-
वाघटितस्यैवप्रतियोगिवैयधिकरण्यघटितस्यसर्ववथासिद्धान्ततया
तत्रनातिव्याप्तिसम्भव इति तदुपेक्षायुज्यत इति तदपिनमनोरमं
यद्यपीत्यादिग्रन्थालोचनेकृतेऽभावघटितकल्पस्यैवदानीमङ्गीकारवि-
षयत्वप्रतिभासात् । वस्तुतस्त्वभावघटितकल्पस्य स्वनिरूपितयादृ-
शप्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वाधिकरणवृत्यभावीय-
तादृशप्रतियोगितानवच्छेदकत्वघटितस्यैवनिष्कृष्टतयातत्रनातिव्याप्तिः
गवात्यन्ताभावस्य लक्षणघटकत्वादित्यत्रैवयद्यपीत्यादेस्तात्पर्य्या-
ज्ञकोपिदोष इति ।

सृष्टिकालवृत्तित्वबिशिष्टगोत्वात्यन्ताभावेऽति, नचतत्प्रतियोगि-
तायान्निरवच्छिन्नावच्छेदकताकत्वविरहइतिवाच्य मेतन्मतेसद्धेता-
वपि तादृशाभावस्यैवलक्षणघटकतया तत्प्रतियोगितायान्तत्संपत्य-
र्थं साध्यतावच्छेदकनिष्ठसावच्छिन्नावच्छेदकत्वानिरूपितत्वार्थक
त्वस्य तस्य वाच्यत्वादिति ॥ ० ॥

गोत्वावच्छिन्नत्वस्वीकारेपीति, यद्यपिध्वंसस्य तद्व्यक्तिप्रति-
योगिकत्वस्यैवानुभविकतया प्रतियोगितातिप्रसक्तस्यगोत्वस्य न प्र-
तियोगितावच्छेदकत्वसम्भवः नचगौर्नास्तीतिप्रतीतिरिव गौर्नष्ट इत्य-
पिप्रतीतिर्दृश्यत इति तत्र सामान्यावच्छिन्नप्रतियोगिताकात्यन्ताभाव

विषयकत्वमिव सामान्यावच्छिन्नप्रतियोगिताकध्वंसविषयकत्वमत्रा-
पिस्यादिति वाच्यम् भवेदेतदेवं यदिहिप्रतियोगित्यंशे भासमानधर्मस्य
प्रतियोगितावच्छेदकत्वानियमोऽकारणकृतस्स्या न्नास्त्येव तादृशः
स अत्यन्ताभावस्यच तत्वम्बाधबुद्धिविरोधित्वानुरोधेनाभ्युपेयते गौ-
रस्तीतिबुद्धिकालेप्यत्रगौर्नष्ट इति बुद्ध्युत्पत्तेर्ध्वंसस्यच तत्वन्नाभ्यु-
पेय न्तथाप्येकजातीयेषुचरमव्यक्तिध्वंस समये तज्जातीयसामान्य-
ध्वंसप्रतीतेरानुभविकत्वे तस्य तज्जातीयव्यक्तिमात्रबुद्धावेव विरो-
धितया तदनुरोधेनैव सामान्यावच्छिन्नप्रतियोगिताकत्वंध्वंसेभ्यु-
पेय न्तत्प्रतियोगिताया अतीतानिखिलंव्यक्तिसाधारणतया नागत-
स्य तज्जातीयस्याविद्यमानतया च सामान्यन्नतदातिप्रसक्तमित्या-
शयः । अपितोक्तसामान्यध्वंसप्रतीतेः प्रामाणिकत्वे विवादाभि-
व्यक्तिः कृतेति ॥ ७ ॥

सम्बन्धानवच्छिन्नस्यैवेति, तादृशसम्बन्धानवच्छिन्नत्वञ्चपारि-
भाषिकमेवबोध्य न्तेननतादात्म्येनघटाभावसाध्यकसद्धेतौ हेतुसमा-
नाधिकरणसंसर्गाभावीयतादृशसम्बन्धानवच्छिन्नप्रतियोगित्वाप्रति-
सिद्धिः । नच विषयत्वध्वंसमादायलक्षणसङ्गतिरितिवाच्यम् ता-
दृशसाध्यकव्यभिचारिण्यतिव्याप्तेरिति ॥

साधारण्यादिति, इदञ्चभेदभिन्नाभावत्वस्य संसर्गाभावत्वात्मक-
त्वमभ्युपेत्य संसर्गारोपजन्यप्रतीतिविषयाभावत्वपक्षे ध्वंसीय प्रति-
योगितायांसम्बन्धावच्छिन्नत्वस्यस्वीकृतयातत्प्रयोगितायामुक्तसम्ब-
न्धानवच्छिन्नत्वस्यासंभवादिति ॥

मानाभाव इति, नच प्रलयएव मानाभावइति वाच्यम् समयस-
मवायिभिन्नवृत्तिध्वंसप्रतियोग्यवृतिकार्य्यद्रव्यत्त्वं कार्य्यद्रव्यप्रागभाव-
समानकालीनारम्भकातिरिक्तकार्यद्रव्यानधिकरणवृत्ति ध्वंसप्रति-
योगिवृत्तिकार्य्यमात्रवृत्तिधर्म्मत्वा च्छब्दत्वव दित्यनुमानस्यैवमान-
त्वादिति ।

मानत्वादिति, इदमुपलक्षणम्—सर्गान्तरीयद्व्यणुकोत्पत्त्यनुरोधे-
नापिप्रलयेस्पन्दःस्वीकरणीय इति ॥

तृतीयक्षणइति—महापवनजलवर्षानलादिभि रदृष्टसहकृतैः स्थू-
लेषु विनष्टेषु त्रसरेणुनाशार्थं परमाणुक्रियाजायते ततोविभाग स्त-
दनन्तरं पूर्वसंयोगनाश स्ततउत्तरदेशेन क्षणैकस्थायिनात्रसरेणुना-



संयोगो द्व्यणुकनाशश्च ततः क्रियानाश स्त्रसरेणुनाशश्च ततउत्तर
संयोगनाश स्सएवक्षणोनिखिलजन्यानाधारत्वान्महाप्रलयइत्युच्यते
तत्क्षणमादायपूर्वैतृतीयक्षण इत्यर्थः ।

कार्यद्रव्येणसहैवेति, एवकारेण गगनादिभिस्संयोगोव्यवच्छिद्य-
ते ननुमूर्त्तसंयोगानुगुणाक्रियातएवाविभुसंयोगाभ्युपेयोविभुमात्रसं-
योगानुगुणक्रियायाःप्रयोजनविरहेणानभ्युपेयत्वा त्तथाचात्राप्युत्तरदे-
शसंयोगानुगुणक्रियया विभुसंयोगस्यादेवे त्येवकारार्थासंगति-
रित्यतआह ननित्यत्वामिति, तथाच भावकार्य्यत्वस्यानित्यत्वव्या-
प्ततयातदानींगगनादिसंयोगस्वीकारेनाशकाभावेननित्यत्वापत्याव्या-
पकविरहेणभावकार्य्यत्वप्रतिक्षेपेतत्स्वरूपप्रतिक्षेपः प्रयोगश्च महाप्र-
लयपूर्वतृतीयक्षणोत्पन्नसंयोगो ननित्यैकवृत्तिः नाशातिरिक्तनाशक-
पूर्वत्वानधिकरणत्वेसतिभावकार्य्यत्वा द्यन्तैवन्तन्नैवं यथासृष्टिका-
लीनगगनपरमाणुसंयोगः शब्दध्वंसेव्यभिचारवारणायविशेष्यदलं
तस्यकालेपिद्रव्यातिरिक्तेविशेषणत्वस्वीकारेतर्कस्फुरणायैवतदिति-
बोध्यम् विपक्षवाधकश्चात्र भावकार्यस्यानित्यत्वव्याघातः नचकारण-
सत्वेनियमक्षतिर्नकार्य्यवारणायालमिति गगनसंयोगःस्यादेव एव-
मुक्तनियमोप्यप्रयोजकएव भावकार्यस्याविनाशित्वेक्षत्यभावात् त-
स्मान्नाशकपूर्ववर्तितैवाविनाशित्वेप्रयोजिका।नतुभावकार्य्यत्व मन्यथा
कार्य्यत्वमात्रस्यविनाशित्वप्रयोजकत्वमभ्युपेत्यनाशस्यापिविनाशित्वं
स्या देवञ्चाविनाशिनोपिगगनसंयोगस्यस्वीकारेनकापिहानिरिति-
वाच्यम् प्रलयप्रयोजकादृष्टस्यैवगगनसंयोगप्रतिबन्धकत्वाभ्युपगमेन-
तदभावात्मककारणविरहा द्भावकार्य्यानधिकरणस्यैवप्रलयत्वेनोक्त-
संयोगोत्पत्तौप्रलयत्वव्याहतेः नचोपभोगयोग्यभावकार्य्यानधिकरण-
त्वमेवप्रलयत्वम्प्रलयेभावका।र्य्यसत्वनिर्णयएवो पभोगयोग्यभावकार्य्य-
त्वत्वेनपक्षतायांगौरवस्यप्रलयसाधकानुमानसह्यत्वा दन्यथा द्व्यणु-
कस्यापिकस्यचित्सत्वेक्षत्यभावेनतत्सत्वस्याप्यापत्तेः एवम्भावकार्येषु-
सर्वेषूपलब्धंविनाशित्वम्भावकार्य्यत्वव्यापकतयैवगृहीत न्नचतन्नित्य-
भावकार्यसम्भावनामात्रेणहातुमुचितमेतदनुरोधेन तदभावस्यैवव्यव-
स्थापनीयत्वात् नचभावत्वमकिञ्चित्करं ध्वंसध्वंसेप्रलयेसर्वभावोन्म-
ज्जनप्रसङ्गा दनन्तध्वंसस्वीकारप्रसङ्गेनगौरवप्रसङ्गाच्च नचप्रलयेविभा-
गावस्थानसम्भवः तस्योत्तरदेशसंयोगेनैवप्रायोविनाश्यत्वा दन्यथा-

प्रहरादिपूर्वोत्पन्नविभागावनुत्पन्नविभागौचघटावालोचयताञ्जायमान-
विभक्तप्रतीतिस्समानाकारत्वेनानुभूयमानैकत्रविभागविषयिणीपरत्र-
संयोगाभावविषयिणीतिस्या त्सतिविभागेकुत्रापिनतद्विषयिणीतिव-
क्तुमशक्यत्वा न्नचेष्टापत्ति रनुभूयमानसमानाकारत्वभङ्गापत्तेः नच-
संयोगाभावेनैवविभक्तप्रतीतेर्गतार्थता भावत्वेनानुभूयमानत्वा द्विनि-
गमनाविरहेणसंयोगप्रतीतेरेवविभागाभावविषयत्वप्रसंगाच्च किञ्चो-
त्तरसंयोगस्यानाशकत्वे गिभक्तयोर्ययोर्नसंयोगोनित्ययोस्तयोर्विभाग-
स्याविनाशित्वप्रसङ्गः नचभावकार्य्यस्याविनाशित्वमिष्यतइत्यलम-
प्रस्तुतविचारवाहुल्येनेति ॥ ० ॥

स्वमतेद्व्यणुकस्याभावादिति, तस्यमेरुसर्षपयोःसाम्यप्रसंगवारणा-
यावयवधारायाविश्रामस्यवाच्यत्वेलाघवात्त्रुटावेवविश्रामोवाच्यस्तद-
पकृष्टमहत्त्वस्यचनित्यत्वाङ्गीकारा दपकृष्टमहत्वंप्रत्यनेकद्रव्यत्वस्य-
प्रयोजकतया सप्रयोजकत्वेनाभिमत न्त्रसरेणु स्सावयव श्चाक्षुषद्रव्य-
त्वादित्यादिद्व्यणुकादिसाधकमनुमान मप्रयोजकमेवा णुत्वव्यवहार-
श्चापकृष्टपरिमाणैरेवोपपादनीयइति नद्व्यणुकादिस्वीकारेप्रयोजनमि-
त्याशयः ॥ ० ॥

बलवत्तरप्रमाणाभावादिति, ब्राह्मचंवर्षशतमित्यस्येदानीमागमत्वा-
नुपलब्धे रागमत्वेनप्रसिद्धेरैतिह्यतया तत्रप्रामाण्यासम्प्रतिपत्तेः अ-
विधित्वेनान्यार्थतात्पर्यकत्वसंदेहाच्च सर्गान्तरीयद्व्यणुकोत्पत्त्यर्थम्
क्रियाभ्युपगमोऽपिप्रलयाव्यवहितोत्तरक्षणएवहिद्व्यणुकोत्पत्तेः प्रामा-
णिकत्वएवतस्यचसविवादत्वादितिभावः ॥

तच्चिन्त्यमिति, परंप्रत्युद्भावितस्यदोषस्यपरमतेनासम्भावित्व-
एवादोषत्वमत्युचितं स्वमतेनतस्यादोषत्वन्तु नदोषतयाऽनुद्भावन-
प्रयोजकमिति महाप्रलयस्यपराभ्युपगततया महाप्रलयान्तर्भावेणा-
तिव्याप्तिवारणमेव स्थलान्तरानुसरणवीजमतिसुन्दरं नतुस्वमतेद्व्यणु-
कासम्भवेनस्थलासम्भवः प्राचीनैस्तु त्रसरेणुनित्यताया स्सन्दिग्धत-
याव्यभिचारसंशयस्यचाप्रतिबन्धकतया चाक्षुषद्रव्यत्वेऽनित्यत्व-
सावयवत्वादिव्याप्यत्वेनिश्चिते त्रसरेणुपरिमाणस्यनित्यत्वासम्भवात्
द्व्यणुकादिसाधकमनुमान न्नाप्रयोजकं नचमहदारम्भकारम्भकत्वात्प-
रमाणुत्वेनाभिमतस्याप्यस्तुसावयवत्व मनवस्थाभयेनकुत्रापिविश्रा-
मस्यवाच्यत्वे परमाणाविषतत्रैवास्तुविश्राम इतिवाच्यं महदारम्भ-





कस्यानवयवत्वे यथामहतोघटस्यमहत्वानुपपत्तिः कपालस्याने-
कत्वाभावेनघटस्यानेकद्रव्यत्वाभावा न्नतथा महदारम्भकारम्भकस्या-
नवयवत्वे महत्वानुपपत्तिरिति तस्याप्रयोजकत्वा त्कपालिकादीनाम-
पि महदारम्भकत्वादेव सावयवत्वमिति नपरमाण्ववयवप्रसङ्गइत्ये-
वन्द्व्यणुकस्याभ्युपेतत्वादितिचिन्तावीजम् ॥ ० ॥

इतिमतइति, प्रलयोप्यदृष्टाधिकरणजन्यस्यनित्यसुखसाक्षात्का-
रस्यसत्वादितिशेषः सुखमात्रस्यपरमपुरुषार्थत्वभ्रममूलकमेवचतन्म-
तम्बोध्यं दुःखाभावस्यपुरुषार्थताव्यवस्थाप्यविस्तरेणतन्मतखण्ड-
नस्यभट्टवार्तिकएवोपलब्धत्वादिति ।

कार्य्यमात्रम्प्रत्यदृष्टस्येति, अयमाशयः नहिप्रयोजननिमित्ताभ्या-
म्विनाकस्यचित्कार्य्यस्योत्पतिरिति सामान्यतोनियमे प्रयोजनस्य
चेतनसम्बद्धस्या नियमवारणाय तत्तच्चेतनादृष्टनियम्यतायाः स्वी-
करणीयतया महाप्रलयस्यापि मोक्षविरोध्यात्मविशेषगुणादिभावावि-
रोधितया सप्रयोजनस्य तत्वज्ञानद्वारामोक्षप्रयोजकादृष्टैरेवोत्पादनी-
यत्वा ददृष्टजन्यत्वम् अतएव महाप्रलयस्य सुखदुःखाद्यजनकतया
कथमदृष्टजन्यत्वा न्नचाज्ञातोत्पत्तिविनाशवता मंकुरादिना मप्यप्र-
योजनत्वे प्यदृष्टजन्यत्वस्वदितिवाच्य म्परमकारुणिकानां योगिना
मुत्पन्नयोगजधर्म्माणा मेवान्ततःसांसारिकजन्तुसुखजननयोग्यतथा-
विधानाम्विनाशेदुःखस्य दुःखजननयोग्यतथाविधानाम्विनाशे सु-
खस्य सम्भवात् तत्तदङ्कुरक्लेदादिना क्रिम्याद्युत्पादकतयावा संसारे
कथञ्चित्सर्वेषामेव प्रयोजनवत्वादित्यपिनिरस्त म्भविष्यन्महाप्रल-
यसाक्षात्कारेण योगिनामेववासुखाद्युत्पत्तिसम्भवेन कथञ्चित्सप्रयो-
जनत्वाच्चेति । केचित्तु लाघवेनकार्य्यत्वावच्छिन्नंप्रत्यदृष्टस्यकारणत्वे
व्यभिचारवारणायैवप्रलयेप्यदृष्टोत्तरत्वस्यकल्प्यत्वादिति वदन्ति ।

तदानीमसम्भवादिति, नित्यत्वप्रसङ्गादितिशेषः अविदितेप्रमा-
णाभावादिति क्वचित्पाठः तस्याऽयम्भावः प्रलयप्रयोजकादृष्टादि-
विनाश्य न्तदानींदुःखमास्ता मितियदिब्रूया त्तदपिनसम्भव त्यवि-
दिते ऽसाक्षात्कृते मानाभावादिति इदमुपलक्षणं शरीराद्यनवच्छि-
न्नतस्योत्पत्तेरप्यसम्भवोवोध्यः ।

बाधनिश्चयादीति, गोमत्ताबुद्धौ गौर्नास्तीतिबुद्धे र्नगोप्रतियो-
गिकाभावावगाहित्वेनविरोधित्व न्तस्यतद्गवात्यन्ताभावधीसाधार-

पत्वा श्चापिगोत्वसमनियतप्रतियोगिताकाभावावगाहित्वेन यावद्गौर्नास्तीतिबुद्धेर्विरोधित्वापातादिति गोत्वावच्छिन्नप्रतियोगिताकाभावावगाहित्वेनैवतद्वाच्यतया त्यन्ताभावप्रतियोगितायांसामान्यधर्मावच्छिन्नत्वसिद्धिरितिभावः। ननुभ्रमसाधारण्यानुरोधेन प्रतियोगित्वसम्बन्धावच्छिन्नगोत्वेतरधर्मानवच्छिन्नप्रकारतानिरूपिता भावत्वावच्छिन्नविशेष्यत्वाभिन्नप्रकारताकनिश्चयत्वेनैव विरोधित्वम्वाच्यमिति नप्रतिबध्यप्रतिबन्धकभावानुरोधेनतत्सिद्धिरतआहादीति तथाच प्रतिबध्यप्रतिबन्धकभावस्यविषयविरोधाधीनतया गोप्रतियोगिकाभावादीनान्नतत्वमिति गोमात्रावच्छिन्नप्रतियोगिताकाभावस्यैवतद्वाच्यतया सामान्यधर्म्मावच्छिन्नत्वसिद्धिः नचकेवलगोत्वावच्छिन्नस्यविलक्षणमेवप्रतियोगित्वंसंसर्ग स्तेनचतत्सत्वन्नतद्गवाद्यभाव इति प्रतियोगित्वमात्रएवधर्म्मावच्छिन्नत्वेमानाभावः भवतापिगोत्वमात्रावच्छिन्नत्वस्यविलक्षणस्यैवस्वीकरणीयत्वा दन्यथातस्याभावघटितत्वेनानवस्थापातादितिवाच्यं यावल्लक्षयितुंशक्यन्तावद्वैलक्षण्याभ्युपगमस्यानुचितत्वा त्प्रतियोगित्वञ्च तत्तद्धर्मावच्छिन्नत्वेनलक्षयितुंशक्यत इतितत्त्यागस्यानुचितत्वेना वच्छिन्नत्वाभ्युपगमात् तन्मात्रावच्छिन्नत्वमपि तदतिरिक्तानवच्छिन्नत्वत्वेनलक्षयितुंशक्यमिति तदपिलक्षणीयमेव अनवस्थितिश्च तत्वाद्यनुगतधर्मघटितत्वेन सामान्यतोज्ञानेनदोषाया स्तुवातद्विलक्षणमेव कानोहानि रित्येवानिर्वचनीयताबाद्यतिरिक्तानामवमच्छिन्नत्ववादिनांनिष्कर्षइति—

एकसम्बन्धेनेत्यादि,अथतद्गौर्नास्तीतिबुद्धिस्साक्षात्सम्बन्धेनगोमत्ताबुद्धिमात्रस्यैवविरोधिनी गवावयवेगोमति चत्वरादौच तदनुपपत्तेः कालिकेनगोमत्ताबुद्धिश्च ह्रदत्वाद्यवच्छिन्नविशेष्यिका इदानींगौरस्तीत्येवतत्प्रतीतेः भवतिचतद्विरोधिनी सम्बन्धविशेषानवगाहिनी दानींगौर्नास्तीतिप्रतियोगितायांसम्बन्धावच्छिन्नत्वेमानाभावः नचगोसमवायिनीसंयोगेनगौर्नास्तीतिबुद्ध्युत्पत्तेः सम्बन्धावच्छिन्नत्वमावश्यकम्प्रतियोगितायामितिवाच्यम् गोसंयोगाभावस्यक्लृप्तस्यैवतत्रविषयत्वात् ॥ संयोगविशिष्टगोप्रतियोगित्वेनोल्लेखेपि शिखीविनष्ट इति वह्निशेषणस्यप्रतियोगित्वसम्भवात् नचात्रतत्रैववाधकस्यविरहणकथम्भासमानत्यागइति वाच्यम् लाघकस्यैवप्रयोजकस्यबाधस्यैवसत्वात् उक्तप्रतीतिबलात्सम्बन्धविशेषेणै-



वगोमत्वविरोध्यभावस्येवसाक्षात्सम्बन्धेन गोमत्वमात्रविरोध्यभावस्यापिगौर्न्नास्तीतिप्रतीतिसिद्धस्यसत्वम्बाभ्युपेयम् एवमपितादृशात्यन्ताभावध्वंसबुद्धिसाधारणैकप्रतिबन्धकत्वानुरोधेनध्वंसप्रतियोगितायां धर्म्मावच्छिन्नत्वमावश्यकमितिचेद्धन्ता नुभाविकमपीदम्मतंन्यायसिद्धान्तपक्षपातादपोद्यत तथाहि संयोगेनगौर्नास्तीतिबुद्धिः प्रतियोगितयागामुल्लिखन्तीगोप्रतियोगिकत्वांशेबाधमनासादयन्तीनलाघवमात्रेणगोसंयोगंप्रतियोगित्वेनस्वीकर्त्तुंक्षमतेऽनुभवापलापकस्यलाघवस्याकिञ्चित्करत्वा त्सन्देहएवलाघवस्यवस्तुव्यवस्थापकत्वा द्गोप्रतियोगिकत्वेनसंयोगानुपस्थितावपिसंयोगेन गौर्नास्तीतिबुद्ध्युत्पादाच्च एवञ्चसाक्षात्संबन्धेनगोमन्मात्रेगौर्नास्तीति बुद्धिर्नजायतएवेतिकेनतुभ्यमभ्यधायि संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकाभावातिरिक्तस्यतद्विषयस्यानभ्युपगमा त्संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावावगाहिनीसाप्रत्यक्षबुद्धि स्समवायेनगोमतिसमवायावच्छिन्नप्रतियोगिताकाभावावगाहिनीचसंयोगादिनागोमतिजायतएव योग्यानुपलब्धिरूपसामग्रीवशान्नजायते इतोविपरीता नचैवंसंयोगादिनागोमत्युपलब्धगवात्यन्ताभावः परत्रस्ववोधसंक्रान्तयेऽत्रगौर्न्नास्तीति कथन्नाभिलपतीतिगौर्न्नास्तीतिप्रत्ययवेद्य स्तेननगृहीतइति कल्प्यत इति वाच्यम् समवायेनगौर्न्नास्तीत्याद्यभिलापस्य स्पष्टप्रत्यायनेच्छानिबन्धनत्वेनार्थापत्तेस्पक्षीणव्यापारत्वा त्संम्बन्धानवच्छिन्नप्रतियोगिताकाभावविषयकत्वेनप्रत्यक्षस्यानुव्यवसीयमानतायास्सन्दिग्धत्वेन नततस्तादृशाभावसिद्धि स्तादृशानुभवस्याविवादत्वेतादृशाभावनिराकरणममरगुरूणामप्यशक्यमित्यलम्॥

सम्बन्धविशेषमन्तर्भाव्यैवेति, ननु संयोगसमवायादिसंबन्धेनगोमत्ताबुद्धावुभयसम्बन्धेन गवात्यन्ताभाववत्ताबुद्धेरविरोधित्वेन तद्वारणाय संयोगत्वाद्यतिरिक्तधर्म्मावच्छिन्नसंसर्गत्वानिरूपितत्वस्यैवाविरोधित्वघटकतायावाच्यतया ध्वंसवत्ताबुद्धिसाधारण्यन्दुर्वारमितिचेन्न ध्वंसीयप्रतियोगितायामपिसम्बन्धावच्छिन्नत्वस्वीकारात्। यद्वाभेदप्रतियोगित्वस्य सम्बन्धानवच्छिन्नत्वेतद्ग्रहस्यप्रतिबन्धकत्ववारणायतद्धर्मातिरिक्तधर्म्मानवच्छिन्नसंसर्गतानिरूपितत्वस्यैवबाच्यतयानध्वंसबुद्धिसंग्रहइति यदिचतद्गौर्नास्तीत्यादिबुद्धिरत्य-

न्ताभावत्वरूपानुयोगित्वावगाहिनी तदात्यन्ताभावध्वंसादिबुध्योर्नैकरूपेणप्रतिबन्धकत्वसम्भव इति चिन्त्यम् ॥

विभावनीयमिति, इदानीं गौर्नास्तीति बुद्धेस्सर्वानुमताया अपलापएवचिन्ताबीजम् नचतत्रकालिकेनाभाववत्त्वंविषयः तद्गोर्विद्यमानतादशायामपीदानीन्तद्गोर्नास्तीतिप्रत्ययापत्तेः नचसमवायादिसम्बन्धावच्छिन्नप्रतियोगिताकाभावोविषयः प्रतियोग्यभावान्वयस्यतुल्ययोगक्षेमत्वेनेदानींगौरित्यत्रकालिकेनगोमत्त्वस्यप्रतीतत्वेननञातत्संबन्धावच्छिन्नाभावबोधस्यैवानुभविकत्वादिति ।

नन्विदानीमश्वइत्यादि, । अत्रकालवृत्तितावच्छेदकत्वंदेशेभ्युपेत्येदानींकालेऽश्वेचस्वरूपतएवगोत्वाभावस्याभ्युपगम्यतयाश्वइवकालेपिस्वरूपतएवतत्सत्वमङ्गीकृत्यकालाश्वोभयवृत्तित्वङ्गोत्वाभावेबिषयआस्तामितिचे देवन्देशवृत्तितायांकालस्याप्यवच्छेदकत्वन्नस्यादिदानींगेहेगौर्नास्तीत्यत्राप्युक्तयुक्त्यावृत्तित्वद्वयस्यैवविषयत्वसम्भवान्नचेष्टापत्ति रनुभवविरोधा दन्यथागोस्तद्गेहेविद्यमानत्वदशायामिदानींगेहेगौर्नास्तीतिप्रतीतिरपिस्यात् ॥ गेहेकालान्तरावच्छेदेनतत्कालेचदेशान्तरावच्छेदेनगवात्यन्ताभावस्याभ्युपगततयावृत्तित्वद्वयावगाहित्वेऽवाधितत्वात् तस्या अपीष्टत्वेभवतिभवतांमतिर्ज्ञानातुतथैवभवान्किमनुरोधेनचरणपातेनापिवयन्देशकालादीनामवच्छेदकत्वमङ्गीकारयामइत्याखण्डलार्थः ॥

प्रतियोग्यारोपस्तज्जन्येति, । आरोपस्यजनकताचोपलभ्येतेत्येवमापत्तिद्वाराबोध्येति ॥

पूर्व्वोत्तरकालावेवेति, अयमिदानींयदिस्वाश्रयोत्तरकालकत्वसंसर्गेणघटवान्स्यात् घटवत्वेनोपलभ्येत इतिध्वंसप्रत्यक्षे अयमिदानींस्वाश्रयपूर्वकालकत्वसम्बन्धेनघटवान्स्यात्तत्वेनोपलभ्येत इति प्रागभावप्रत्यक्षेकारण मित्युत्तरकालपूर्वकालयोः सम्बन्धघटकत्वात् सम्बन्धत्वमित्याशयः ॥

चक्रकादिप्रसङ्गइति, स्वग्रहसापेक्षग्रहसापेक्षग्रहसापेक्षग्रहविषयत्वेनस्वभिन्नत्वप्रसङ्गइत्यर्थः स्वमत्यन्ताभावत्वं तद्ग्रहसापेक्षोनियमग्रह स्तत्सापेक्षस्संसर्गाभावत्वग्रह स्तत्सापेक्षत्वस्यात्यन्ताभावत्वग्रहेसत्वा दापादकसत्वं चक्रकप्रसङ्गव्याप्यावात्माश्रयान्योन्याश्रयप्रसङ्गावितिनतौदर्शितावितिबोध्यम् ॥



कथञ्चिदिति, उक्तारोपम्बिनाजायमानप्रत्यक्षस्थलेपिताद्दशारोपंप्रकल्प्येत्यर्थः ॥

स्वीकारेपीति, अपिनात्यन्ताभावप्रत्यक्षेप्रतियोग्युपस्थितिसहकृतयोग्यानुपलम्भस्य प्रागभावप्रत्यक्षेप्रतियोगिजनकसामग्र्युपलम्भसहकृतस्यध्वंसप्रत्यक्षेनाशकोपलम्भसहकृतस्य कारणत्वादेवसर्वत्रानिर्व्वाहान्नप्रतियोग्यारोपस्य कारणत्वमितिसूचितम् नचनाशकोपलम्भसहकारोव्यर्थः असमवायिकारणमात्रनाशाधीनकार्यनाशस्थलेऽनुपलब्धासमवायिकारणनाशस्यध्वंसप्रत्यक्षापत्तेः नच कपालखण्डाद्युपलब्धिस्थलेध्वंसबुद्ध्यनुपपत्तिरानुमानिकत्वात्कपालध्वंसमनुमायघटध्वंसस्यप्रत्यक्षसम्भवादिति ।

निरुक्तसंसर्गाभावत्वविरहेति, संसर्गारोपजन्यप्रतीतिविषयवृत्त्यभावविभाजकोपाधिमत्वस्यसंसर्गाभावत्वरूपत्वेनातिव्याप्तिरिति चिन्तनीयम्० ॥

सदातनत्वविशिष्टमिति, नचघटाभावाभावस्यघटरूपतयाऽनित्यनत्वेसदातनत्वविरहादत्यन्ताभावत्वानुपपत्तिरितिवाच्य मतिरिक्तत्वाभ्युपगमाद्घटकालविशिष्टस्यैवसंसर्गत्वाभ्युपगमेन घटाभावदशायान्तत्सत्वासम्भवात् । यद्वाभावत्वस्य भावभेदरूपतयाघटस्वरूपेतत्रतद्विरहेणात्यन्तभावत्वविरहेपिनदोषइति ॥

अनुयोगिताविशेषोवेति, इदन्तुबोध्यं भेदत्वस्यानुयोगिताविशेषत्वेऽत्यन्ताभावत्वस्यापितद्रूपत्वमेवेति ॥

सास्नादावव्याप्तीति, साध्यतावच्छेदकम्बन्धावच्छिन्नत्वस्यपारिभाषिकत्वेनदोषसम्भवइति तु विभावनीयम् ० ॥

इदमप्यभावेत्यादि, नतु धर्म्मिभेदधर्म्मात्यन्ताभावयोरैक्येऽव्याप्तिविरहेऽप्यभावाधिकरणकाभावस्याधिकरणस्वरूपत्वेगोभेदस्यापिहेतुसमानाधिकरणात्यन्ताभावरूपतयातत्राव्याप्तिरस्त्येव नचाभावाधिकरणकोप्यभावोभावप्रतियोगिकएवाधिकरणस्वरूपइतिवाच्यम् तादात्म्येनाभावसाध्यकेतथाप्यव्याप्तिरितिचेन्न हेत्वधिकरणानिरूपितवृत्तितावच्छेदकानुयोगितानिरूपितसंसर्गाभावीयप्रतियोगित्वाविवक्षायान्दोषाभावात् नचात्यन्ताभावीयत्वप्रवेशप्रयोजनाविरहोत्राप्यस्त्येवेतिवाच्य मिष्टत्वात् ० ॥

यथायादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वंहेतुमतस्त-

स्प्रतियोगितानवच्छेदकत्वघटितलक्षणेसंसर्गाभावीयत्वप्रवेशप्रयोजन·
विरहएवनतथाव्याप्यवृत्तिसाध्यकस्थलीयलक्षणेपि तत्राव्याप्तेरपि
सम्भवादित्यत्र तात्पर्य्यादिति ॥

सहजत एव प्रतियोगिव्यधिकरणत्वादिति, इदानीं प्रतियोगिस·
म्बन्धित्वप्रवेशे प्रयोजन विरहेण प्रतियोग्यधिकरणत्वाभावस्यहेत्व·
धिकरणेसत्वसम्भवादिति भावः ।

अव्यावर्त्तकत्वादिति, सावयवत्वस्य तत्प्रयोजकत्वा दन्यथा
विभूनामपिव्यावर्त्तकत्वापतेः ॥

नन्वस्त्ववच्छिन्नपरिमाणवत्वमेव व्यावर्तकत्वेप्रयोजकमित्यत्र·
सिद्धान्तभंग रूपदण्डमाहकालोपाधीति, नचदिगुपाधितायामव·
च्छिन्नपरिमाणवत्वम् कालोपाधितायाञ्चजन्यत्वंप्रयोजकमिति नदो·
ष इति वाच्यम् परमाणूनांव्यावर्त्तकत्वस्यानुभावकत्वंहिप्रयोजकभे·
दकल्पनायुज्यते नचासन्दिग्धन्तदस्तीत्युभयत्रापिसावयवत्वस्यैव
प्रयोजकत्वौचित्यादिति ।

प्राचाम्मत इति, प्राच्याम्घट इति बुद्धिर्न्नदिङ्मात्रमाधिकरण·
तयाविषयीकरोति प्रतीच्यां घट इति प्रत्ययापत्ते र्नाप्युपाधिमात्रम् ।
वृक्षो घट इति प्रत्ययापत्तेः किन्तूपाधिविशेषविशिष्टान्दिश·
न्तत्रोपाधेरवच्छेदकत्वमेवनत्वधिकरणत्व मित्येके । विशिष्ट बुद्धे·
र्विशेषणविशेष्योभयसम्बन्धावगाहित्ववद्विशिष्टानुयोगिकबुद्धेर्विशे·
षण विशेष्योभयानुयोगिकसम्बन्धावगाहितया दिशीवदिगुपाधाव·
प्यधिकरणत्व ञ्चघटेरूपमित्यादिविशिष्टबुद्धिःकथमितिवाच्यं त·
स्योलपक्षितानुयोगिकत्वस्यैवस्वीकारादित्यर इति विवादप्रदर्श·
नायमतइत्युक्तम् ।

एवमवच्छेदकतासम्बन्धेनेति, ममान्तष्करणेकोपो ममचेतसिरा·
गइत्यादिप्रामाणिकव्यवहारदर्शनाद्द्वेषेच्छाद्यात्मविशेषगुणावच्छेद·
कत्वस्यमनोनिष्ठस्यवृत्तिनियामकत्वमभ्युपेत्य । यत्तुचेष्टात्वावच्छिन्नंप्र·
तिकृतेरवच्छेकतासम्बन्धेनकारणत्वामितितदनुरोधेनवृत्तिनियामकत्वं
तस्येति तदपिकारणत्वघटकप्रतियोगितायांकारणतावच्छेदकसम्ब·
न्धावच्छिन्नत्वस्यप्रवेशपक्षेवृत्त्यनियामकस्यप्रतियोगितानवच्छेदकत·
याकारणत्वासम्भवा दत्रतादात्म्यादीनामपिवृत्तिनियामकत्वप्रसङ्गा·
पातीघादरोविधेयः ।



दिक्कालयोरीश्वरानतिरिक्तत्वादिति, तयोरीश्वरानतिरिक्तत्वेऽ
पिसूर्य्यपरिस्पन्दावच्छिन्नेतत्रेदानींघटइत्यादिबुद्धिविषयत्वमुदयादिस·
न्निधानाद्यवच्छिन्नेप्राच्यांघटइत्यादिबुद्धिविषयत्वंघटादीनान्तुनोपाधि·
त्वं तेनोपधेयोपाधेरेकत्वनेदानींघटःप्राच्यांघटइत्यनयोरेकत्रप्रसङ्गः ।
घटादीनामुपाधित्वस्यानुभविकत्वउक्तप्रसङ्गवारणायतयोर्भेदोनकेनाप्य·
पलपितुंशक्यइतिमन्तव्यम् । मतामिदन्दीधितिकृतोनात्यादरणीय
न्न्यायविद्भि रुक्तयुक्त्यातत्तदन्तष्करणशरीराद्युपाधिभेदकल्पनयासर्व·
दोषपरीहारेणैकचेतनवादरूपौपनिषदमतप्रवेशापत्तेरिति ॥ ० ॥

स्वप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नमिति, अत्र स्वप्रतियो·
गिताविशिष्टनिरूपकताकाधिकरणत्व वन्निरूपितवृत्तित्वन्नास्तीति प्रा·
तीतिकोभावोलक्षणघटकः वैशिष्ट्यं च स्वावच्छेदकधर्म्मावच्छि·
न्नत्व स्वनिरूपितसंसर्गतावच्छेदकधर्म्मावच्छिन्नसंसर्गताकत्वो·
भयसम्बन्धेनेति— प्रतियोगितावच्छेदकावच्छिन्नत्वञ्च—प्रतियोगि·
तावच्छेदकतापर्याप्त्यधिकरणधर्म्मपर्याप्तावच्छेदकताकत्व न्तत्रन्यू·
नवारकपर्याप्तिनिवेशफल म्विशिष्टसत्तावाञ्जातेरित्यत्रग्रन्थेकृतैवोक्त
मितरवारकपर्याप्तिनिवेशफलन्तु वह्निमान्महानसीयवह्निमद्विषयक·
ज्ञानत्वादित्यत्रातिव्याप्तिवारणम्–नचास्यसद्धेतुत्वमेवेतिवाच्यं शु·
द्धवह्नित्वावच्छिन्नस्य शुद्धवह्नित्वावच्छिन्ननिरूपितविषयित्वस्य संस·
र्गतया महानसीयवह्निज्ञानेतस्यसत्वेनतेनसम्बन्धेन साध्यतायांस
द्धेतुत्वेऽपि प्रकारितासम्बन्धेनसाध्यतायांव्यभिचारित्वात् । नचत·
ज्ज्ञानस्यवह्निप्रकारकतयातत्सम्बन्धेनतत्रकुतोनवह्निसत्वमितिवाच्यं
शुद्धवह्नित्वावच्छिन्नस्य शुद्धवह्नित्वावच्छिन्ननिरूपितप्रकारित्वस्यैव
संसर्गत्वा त्तादृशीचप्रकारिता नतज्ज्ञाने महानसीयत्वस्याधिकस्य·
निरूपकतावच्छेदकत्वात् उभयधर्म्मावच्छिन्ननिरूपितप्रकारित्वञ्च न·
प्रत्येकधर्मावच्छिन्नस्य संसर्गः । विशिष्टसत्तात्वावच्छिन्ननिरूपित·
समावायस्य तत्रतत्रप्रतिपादितसत्तात्वावच्छिन्नासंसर्गत्ववत् । त·
स्यापिचप्रकारित्वस्यसंसर्गत्वे महानसीयवह्निमदितिज्ञानानन्तरं व·
ह्निमत्वेनजानामीत्यनुव्यवसायापत्तेः महानसीयवह्निमानित्यनुमित्यन·
न्तरंवह्निमनुमिनोमीत्यनुव्यवसायापत्तेश्च·नचतदिष्यते तथासतिवह्नि·
त्वमात्रावच्छिन्नविधेयताकानुमितौप्रमाणाभावप्रसङ्गात् । वह्निंजाना·
मीत्यनुव्यवसायश्चन प्रकारितासम्बन्धेनज्ञानांशेवह्न्यवगाही व·

ह्निविशेष्यकज्ञानानन्तरमपितदुत्पादा त्किन्तु विषयित्वमात्रेणे-ति एवं प्रतियोगितासम्बन्धेनवह्निसाध्यकमहानसीयवह्न्यभाव-त्वहेतुकातिव्याप्तिवारणमपि महानसीयवह्निसाध्यकवह्निमहानसीय-विषयकज्ञानत्वहेतुकातिव्याप्तिश्च वह्नित्वमहानसीयत्वगतद्वित्वमहा-नसीयत्ववह्नित्वगतद्वित्वयोर्भेदेसहजतएववारणीया तदभावएक-त्वादेःपर्य्याप्त्यनभ्युपगमेच समवायेननमहानसीयत्वविशिष्टत्वेस-तिकालिकेनवह्नित्वाविशिष्टसाध्यकेधूमेव्यभिचारिणि समवायावच्छि-न्नवह्नित्वनिष्ठावच्छेदकतानिरूपितकालिकावच्छिन्नमहानसीयत्वनिष्ठा-वच्छेदकतानिरूपितनिरूपकतामादायातिव्याप्तेर्व्वारणायच प्रतियो-गिताविशिष्टनिरूपकत्वमेवादरणीयं वैशिष्ट्यञ्च स्वनिरूपितावच्छे-दकताविशिष्टान्यावच्छेदकत्वानिरूपितत्व स्ववृत्तित्वोभयसम्बन्धेन वृत्तिताच स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपित-त्वसन्बन्धेन वैशिष्ट्यञ्चोभयत्र प्रसिद्धचतुष्टयेषुयावदादेयन्तैश्चबो-ध्यम् एवञ्चप्रतियोगितावच्छेदकानिरूपकतावच्छेदकयो र्विशिष्टा-वच्छेदकत्वपक्षेभिन्नतया स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन-प्रतियोगितावच्छेदकतावैशिष्ट्यस्यनिरूपकतावच्छेकताया वि-रहा द्विशेषसम्बन्धस्यावच्छेदकत्वपक्षे स्वावच्छेदकसम्बन्धाव-च्छिन्नत्वविरहेणतद्वैशिष्ट्याविरहान्नमहानसीयवह्निसाध्यकव्यभिचा-रिण्यतिव्याप्तिः । अथविशिष्टस्यानवच्छेदकत्वे सम्बन्धविशे-षस्यानवच्छेदकत्वे च कागतिरितिचेन्न रक्तदण्डवानितिप्रती-तौस्थलभेदेनयथाविलक्षणावच्छेदकताद्वयस्वीकार स्तथामहान-सीयवह्निमानितिज्ञानम्बह्निमहानसीयवदितिप्रतीतेर्वारणायमहानसी-यवह्निमदिति प्रतीत्युपपत्तयेच महानसीयविशेषणतापन्ने वह्निविशे षणतापन्नेच वह्नित्वइवावच्छेदकत्वद्वयस्यविलक्षणस्यस्वीकरणीयतया-स्ववृत्त्यवच्छेदकतात्वव्याप्यधर्म्मवत्त्वस्यापिवैशिष्ट्यघटकत्वाङ्गीकारे-णातिव्याप्तिवारणस्यकर्तुं शक्यत्वादितिमादृशामपरःपन्थाः ॥ ० ॥

भेदकूटविशिष्टहेत्वधिकरणेति, हेत्वाधिकरणनिरूपितवृत्तितावच्छे-दककूटत्वप्रतियोगिकपर्य्याप्तीयानुयोगितानिरूपितपरम्परावच्छेक-त्ववत्वनप्रतियोगित्वस्यात्र लक्षणघटकत्वम्बोध्यम् ।

तादात्म्यसम्बन्धेनापीति, अत्रतादात्म्यसम्बन्धेनकस्यचिदपि-नप्रागुक्तव्याप्यवृत्तित्वमितियोजना व्याप्यवृत्तित्वस्यसाध्यतावच्छेद-



कसम्बन्धेनाधिकरणत्वघटितत्वा भ्युपगमेनसङ्गमनीया तत्रतादात्म्ये-नात्मसाध्यस्थले प्रतियोगिवैयधिकरण्याघटितव्याप्तिज्ञानस्यापि-प्रमात्मकतया तस्यव्याप्यवृत्तिसाध्यकत्वस्यसमुचिततया तन्निर्व्वा-हाय सम्बन्धित्वनिवेशस्यावश्यकत्वे सङ्गतिर्ब्बोध्या तादात्म्यसम्ब-न्धेनापि कस्यचिज्जन्यस्य नप्रागुक्तव्याप्यवृत्तित्वमितियोजनातुरम-णीयैवेति ॥

यथाश्रुतमेवसम्यागिति, उक्तव्याप्यवृत्तित्वस्यपारिभाषिकस्यै वालक्ष्यतानियामकत्वेन तादात्म्यसम्बन्धसाध्यकस्थलस्यापिलक्ष्यत-या वास्तविकव्याप्यवृत्तित्वस्यैवेदानीन्तादात्म्येनकपिसंयोगादिमतः स्वीकरणीयतया भेदकूटनिवेशप्रयोजनाभाव इतिभावः ॥

योहेतुस्तदधिकरणेति, अत्रहेत्वधिकरणत्वएवतादृशवृत्तित्वाभा-वस्यविशेषणत्वेतात्पर्य्य न्तेन विषयितयावह्नेर्हेतुत्वेवह्निज्ञानत्वस्य-साध्यत्वेवह्निज्ञानेवह्नौवह्निज्ञानत्वसामानाधिकरण्यंनतूक्तसामानाधिकर-ण्याभावविशिष्टवह्निज्ञानइतिवह्निज्ञानत्वसामानाधिकरण्याभावविशिष्ट वह्न्यधिकरणेतादृशवह्निज्ञाने साध्याभावस्यसत्वेपिनाव्याप्तिःनापि-वह्नित्वावच्छिन्ननिरूपितविषयितयावह्नेर्हेतुत्वे तेनसम्बन्धेनविशिष्ट-वह्नित्वाधिकरणत्वाप्रसिद्धावप्यव्याप्तिः नचसामानाधिकरण्याभावउप-लक्षणं कपिसंयोगसाध्यकवृक्षवृत्तित्वाविशिष्टसत्वेसद्धेतौगुणावच्छेदे-नप्रतियोगिसामानाधिकरण्याभाववत्सत्तानातिरिक्तविशिष्टसत्ताधिक-रणवृक्षवृत्तित्वात्कपिसंयोगाभावस्येत्यव्याप्तेरिति ॥

मूलस्वरसेनेति, यद्यपितादृशमूलस्यसंयोगाभावहेतुकव्यभिचा-रिण्यतिव्याप्तिवारणपरतासंभवति तथापिप्रसिद्धसत्वहेतुकव्य-भिचार्य्यतिव्याप्तिवारणपरतापरित्यागस्यानुचितत्वेनाभावविशेषण-त्वलाभइति ॥ ० ॥ ० ॥

अवच्छेकत्वाभावेति, अत्रैवम्मूलेवृक्षेनकपिसंयोगइत्यत्रापिवृक्ष-वृत्तेः कपिसंयोगनिष्ठाया अवच्छेदकत्वाभावस्यैवाविषयत्वसंभवेन प्रतियोगिवैयधिकरण्यस्यैवव्यर्थत्वंस्या दत्रावच्छेकत्वाभावस्य तत्र-कपिसंयोगाभावस्यैवाविषयत्वमानुभविकमितिनास्माकञ्चित्त मास्क-न्दतीतिचिन्त्यम् ।

हेत्वधिकरणइति, सप्तम्यावच्छेदकत्वार्थकत्वमाहृत्याह प्रतियो-गिवैयधिकरण्यावच्छेदकेति, हेत्वधिकरणइतिसप्तम्यानिरूपितत्वा-

थंकत्वे प्रतियोग्यनधिकरणनिरूपितं यद्धेत्वधिकरणनिरूपितवृत्तित्वं
तद्वदभावे हेत्वधिकरणवृत्तित्व स्प्रतियोगिव्यधिकरणहेतुस माना·
धिकरणत्वान्तस्य यथाश्रुतमेवार्थ स्तत्र व्याप्यवृत्तेरवच्छेदकत्वा·
भावेऽपि नदोषइत्यरुचेराह गुरुतरंचेति, तस्यकेवलान्वयितयेति,
घटादीनांकालोपाधित्वेकालवदेवाभावसत्वं तस्यानुपाधित्वे नित्यव·
देवतन्नतादृशाभावइति भावः ।

दीधितौप्रतियोगितावच्छेदकावच्छिन्नस्य यस्यकस्यचिदित्या·
दि, प्रतियोगितावच्छेदकसमानाधिकरणनिरूपकत्वनिष्ठावच्छेदं·
कताभिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता·
धिकरणत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिता·
कभेदवत्वं निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगित्वनिष्ठावच्छेदक·
कताभिन्ना वच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकताभिन्ना
वच्छेदकत्वानिरूपितधर्म्मनिष्ठाधेयत्वसम्बन्धावच्छिन्नावच्छेदकता-
भिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकत्वभिन्नावच्छेदक
त्वानिरूपितनिरूपकत्वनिष्ठावच्छेदताभिन्नावच्छेदकत्वानिरूपिताधि·
करणत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकभे·
दवत्वं प्रतियोगितावच्छेदकतासमानाधिकरणाधेयत्वसम्बन्धावच्छिं·
न्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदक-
ताभिन्नावच्छेदकत्वानिरूपितनिरूपकत्वनिष्ठावच्छेदकताभिन्नावच्छेद
कत्वानिरूपिताधिकरणत्वनिष्ठावच्छेदकत्वभिन्नावच्छेदकत्वानिरूपि·
तप्रतियोगिताकभेदवत्वम्बोक्तमित्यर्थः ।

अनतिरिक्ततयेति, अयमाशयः विशिष्टसत्तावावान् गुणइति ज्ञाना
नन्तरं सत्वज्ञानामीत्यनुव्यवसायादर्शनात्सत्वस्यद्विधाभानाननुभवा
द्विशिष्टसत्वंसत्वादनतिरिच्यते नचतत्रसत्वस्यविशेष्यत्वमात्रं प्रका-
रत्वन्तुविशिष्टस्येत्यभ्युपगमेप्युक्तानुव्यवसायोपपत्तिरिति वाच्यम् ।
तादृशविशेष्यत्वस्यप्रकारतानात्मकत्वे तज्ज्ञानस्यसमूहालम्बनत्वापत्तेः
सत्तानास्तीतिबुद्धिप्रतिबध्यत्वाद्यनुपपत्तेश्च नचविशिष्टमात्रस्यप्रका-
रत्वेपिप्रकारतावच्छेदकत्वस्यवैशिष्ट्यसत्तात्वोभयवृत्तितयासत्तात्वा·
वच्छिन्नप्रकारताशालिबुद्धित्वरूपप्रतिवध्यतावच्छेदकसत्वान्नानुपप·
त्तिरिति वाच्यम् प्रकारेभासमानस्यैवप्रकारतावच्छेदकतया सत्ता·
त्वस्यविशिष्टावृत्तित्वे तज्ज्ञानस्यभ्रमत्वापातात् वृत्तित्वेह्यनातिरिक्त



त्वाभ्युपगमः नचसत्तात्वमुभयसाधारणोधर्म्मइति वाच्यम् केवल-
स्यविशिष्टव्यावृत्तधर्म्मान्तरानुपलम्भा त्कैवल्यंत्वनेकाविधेविलक्षणे·
प्रमाणाभावात् नचविशिष्टस्यानतिरिक्तत्वेगुणेतत्प्रतीतेप्रमात्वमिति
वाच्य म्विशिष्टाधिकरणत्वस्यप्रमात्वानियामकत्वाभ्युपगमात् नचा·
धिकरणत्ववैलक्षण्यापेक्षयाविशिष्टस्यैवकुतोनवैलक्षण्यमितिवाच्यम्
विशिष्टस्यातिरिक्तस्यस्वीकारेपितन्निरूपिताधिकरणत्वस्यकेवलनिरू·
पिताधिकरणत्वातिरिक्तस्यनिरूपकभेदेनस्वीकारणीयत्वा दियांस्तु·
विशेषोस्माकमवच्छेदकंवैलक्षण्यप्रयोजकं भवतान्तुनिरूपकमेवेति ।
अथविशिष्टाधिकरणत्वस्यप्रतीतिनियामकत्वेसर्वेषामवाभावानामैक्य-
प्रसङ्गः घटवतिघटाभाववत्ताबुद्धेर्घटप्रतियोगिकत्वविशिष्टाभावत्वाव·
च्छिन्नाधिकरणत्वस्याविलक्षणस्यासत्वादेववारणादितिचे त्सत्यं
विशेषणानुपरक्तस्यसत्वस्यप्रतीतिसिद्धतयातस्यसर्वत्रविशिष्टप्रती-
तौ विशेषणोपरागोयुक्तः प्रतियोग्युपरागम्विनाभावबुद्धेरप्रसिद्धत-
या केवलाभावसद्भावेप्रमाणाभावा त्कस्यविशिष्टबुद्ध्यनुसारः स्या·
द्विशिष्टबुद्ध्योहितत्तत्प्रतियोग्युपरक्तत्वेनभिन्नमूर्तिकानेवाभावान्विष·
यीकुर्वन्ति केवलमभावत्वमात्रश्चानुगताकारानुरोधादेकम् एवम्वि·
शिष्टाधिकरणत्वं यदस्माभिः क्वचिदङ्गीक्रियते क्वचिच्चन नतत्रवा·
ङ्मात्रस्य सहायता किन्तुवैशिष्ट्येविशेषणाधिकरणत्वं येनसम्बन्धेन·
निविशिष्टेतेनाविशेषणवत्वाविशेष्यवत्वोभयसद्भावस्य नैतस्याभावा-
धिकरणत्वसत्वासत्वप्रयोजकत्व मसम्भवात् अनीलघटवतिनीलवि·
शिष्टघटत्वावच्छिन्नाधिकरणत्वासत्वप्रयोजकन्तूक्ताधिकरणतानिरूप·
कस्यानीलाद्यावृत्तत्वन्तदिवाभावाधिकरणत्वस्थलेस्वीकारेघटप्रति·
योगिकाभावस्याघटप्रतियोगिकाभावव्यावृत्तावेकाभावकथापिदूरापे·
ता कदाचिद्रक्तस्यदण्डस्यारक्तादशायांरक्तविशिष्टदण्डाधिकरण·
त्वासत्वप्रयोजकंहिविशेष्यसम्बन्धविशेषणेनसहविशेष्याधिकरणस्यै·
ककालत्वं तदपिन प्रकृतेसत्वप्रयोजकं विशेषणस्यघटस्यभूतलेन·
सहैककालत्वात् कालविशेषणस्थलीयाधिकरणत्वप्रयोजकस्य काला·
धिकरणसम्बन्धस्य प्रकृतविषयानन्तर्भावादिति । अतएवाभावस्थ·
लेऽननुभविकमधिकरणत्ववैलक्षण्यमभ्युपेत्य कयोश्चिदभावयोरभेदो-
पगमे सर्व्वेषामेवाभावानामैक्यप्रसङ्ग इत्युक्तं जलादिवृत्तित्वविशिष्ट·
गोत्वाद्यभावेत्यादिदीधितिव्याख्यावसरे विशिष्टस्यातिरिक्तत्वे प्रमा·

न्तत्त्वेतास्वनतिरिक्त-
त्वस्यापारिभाषिकत्वमनुगुणमितियत्प्रागुक्त
तासाधकयुक्तिष्वकिञ्चित्करमित्यलंप्रसङ्गागतविचारवाहुल्येनेति ॥ ० ॥
असम्भवइति, यद्यपि स्वप्रतियोगितावच्छेदकसम्बन्धेनसाध्य-
तावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नसामा-
न्यानाधिकरणत्वविवक्षायान्नासम्भवः तथापिस्वरूपसम्बन्धेनसाध्य-
तायांसङ्केतावव्याप्तिर्भवत्येवेति बोध्यम् ॥
स्वप्रतियोगित्वमित्यादि, स्वत्वस्यानुगतत्वे स्वप्रतियोगितानि-
रूपितसंसर्गतावच्छेदकतासमानाधिकरणाधेयत्वसम्बन्धावच्छिन्ना-
वच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसंसर्गत्व-
निष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेदकत्तानिरूपिताधिक-
रणत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदत्वेननिवेशः भवति चसं-
योगत्वनिष्ठावच्छेदताकसंसर्गताकघटाभावप्रतियोगितावच्छेदका-
वच्छिन्ननिरूपकताकाधिकरणत्वावच्छिन्नप्रतियोगिताकभेदोहेत्वधि-
करणवृत्तिरितिनासम्भवः स्वत्वस्याननुगतत्वेचा भावविशिष्टाभा-
वीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वं वि-
वक्षणीयं वैशिष्ट्यञ्च स्वतादात्म्य स्वविशिष्टनिरूपकताकाधिकरण-
त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्धेत्वधि-
करणवृत्तित्वोभयसम्बन्धेन स्ववैशिष्ट्यञ्च स्वप्रतियोगितानिरूपि-
तसंसर्गतावच्छेदकतासमानाधिकरणावच्छेदकताकसंसर्गताकत्व
स्वप्रतियोगितावच्छेदकतासमानाधिकरणावच्छेदकताकत्वोभयस-
म्बन्धेना त्रोभयत्वावच्छिन्नसंसर्गतानिरूपितावच्छेदकत्वनिष्ठावच्छे-
दकतायां संसर्गतावच्छेदकत्तासामानाधिकरण्यनिष्ठावच्छेदकता-
निरूपितत्वमात्रंनिविशिष्टं तेनस्वनिरूपितप्रतियोगिताकसंसर्गता-
वच्छेदकतासमानाधिकरणसंयोगत्वनिष्ठावच्छेदकत्वघटितविशेषसं-
सर्गेणस्वविशिष्टनिरूपकताकाधिकरणत्वरूपविशेषसम्बन्धावच्छिन्न-
स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वस्यहेत्वधिकरणेसत्वा-
न्नासम्भवः स्वत्वस्यपरिचायकत्वान्नाननुगमः । अथ पूर्वक्षणवृत्ति-
त्वविशिष्टघटाभावाभावस्य साध्यत्वे धूमे घटाभावप्रतियोगितावच्छे-
दकसंयोगेनस्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणपर्वतवृत्ति-
घटाभावात्मकसाध्याभावप्रतियोगितावच्छेदकत्वा त्साध्यतावच्छेद-
कस्येत्यव्याप्तिः नचस्वीययत्प्रतियोगितावच्छेदकसम्बन्धेनस्वप्रति-



योगितावच्छेदकावच्छिन्नानधिकरणत्वंहेतुमतस्तद्वृत्तिसाध्यतावच्छे-
दकसम्बन्धावच्छिन्नप्रतियोगिताकाभावीयतत्प्रतियोगित्वंप्रतियोगि-
ताविशिष्टप्रतियोगितात्वेनानुगतान्निवेश्यं वैशिष्ट्यञ्च स्वतादात्म्य
स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वनिरूपकाभावीयप्रतियोगितावच्छे-
दकावच्छिन्नत्वोभयसम्बन्धेनस्वविशिष्टनिरूपकताकाधिकरणतावत्व-
सम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्धेत्वधिक-
रणवृत्तिसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावीय-
त्वोभयसम्बन्धेनेति नदोष इति वाच्यम् घटवान्तात्क्रियात्वादित्यत्र-
कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्यतत्क्रियासमानकालीनप-
दार्थाभावस्यपूर्वक्षणविशिष्टस्वाभावाभावात्मकतयास्वप्रतियोगिता-
वच्छेदकावच्छिन्नसामान्यान्तर्गतपूर्वक्षणवृत्तित्वविशिष्टस्वाभावस्य-
स्वप्रतियोगितावच्छेदकेनकालिकेनस्वरूपेणवाहेतुमातिसत्वेनाव्याप्ते-
रितिचेन्न स्वविशिष्टप्रतियोगितावच्छेदकावच्छिन्नत्वस्यैवसंसर्ग-
त्वात् वैशिष्ट्यञ्च स्वनिरूपकाभावीयत्व स्वावच्छेदकसम्बन्धाव-
च्छिन्नत्वोभयसम्बन्धेन तथाच तद्व्यक्तिनिष्ठकालिकसम्बन्धावच्छि-
न्नप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नस्वनिरूपकाभावप्रतियोगिता-
वच्छेदकावच्छिन्नत्वस्यतद्व्यक्तिनिष्ठनिरूपकत्वएवसत्वेननाव्याप्तिः ।
नचैवमपिप्रमेयवान्वाच्यत्वादित्यत्रसमवायसम्बन्धावच्छिन्नप्रमेयानिष्ठ
प्रतियोगिताविशिष्टत्वस्यस्वस्मिन् सत्वेनाव्याप्तिरिति वाच्यम् सा-
ध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावीयत्वं विहाय-
साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्यविशिष्टप्रतियोगितायाएव-
विशेषणत्वात् । नचघटनिष्ठसंयोगसम्बन्धावच्छिन्नप्रतियोगिता-
यां स्वरूपसम्बन्धावच्छिन्नत्वविरहेणतादृशप्रतियोगिताप्रसिद्ध्याति-
व्याप्त्यसम्भवात् ग्रन्थासङ्गतिरिति वाच्यम् । स्वरूपसम्बन्धेनसा-
ध्यतायांसङ्केतावुक्तयुक्त्याऽव्याप्त्या साध्यतावच्छेदकसम्बन्धाव-
च्छिन्नत्वस्यपारिभाषिकस्यैवाविवक्षितत्वादिति ।
सत्ताद्रव्यत्वयोरिति, द्वित्वंविवक्षितम् सत्तामात्रेणैव समवेतव्य-
वहारोपपत्तौद्रव्यत्वादीनामननुगतानांतथात्वम् नचविनिगमकाभा-
वः एकमेवहिविनिगमकः द्रव्यत्वादिषुमध्येनैकमपिहितादृशम् यत्-
सर्वत्रसमवेतव्यवहारप्रयोजकं तस्यैकस्यतथात्वेऽपरस्यापितथात्व-
मित्यनेकस्यतादृशाभावत्वेगौरवम् । सत्वस्यतथात्वेच तेनैवसर्वत्रस-

मवेतव्यवहारोपपत्तेर्नापरस्यतथात्वमितिभावः ।
मवेतव्यवहारोपपत्तेर्नापरस्यतथात्वमितिभावः । नियमाच्चेतिभावइति, ननुगुणसामान्याभावाभावस्याप्येकत्वस्वरू-
षत्वमेवास्तु कपिसंयोगादीनांतु नतथात्वम् इत्यात्मत्वहेतावपि नदोष-
सम्भवइतिचेत् अत्रकेचित् स्ववृत्तिपदार्थविभाजकीभूतधर्मानधिक-
रणवृत्तिप्रतियोगिताकाभावावृत्तित्वम् स्वप्रतियोगित्वाविशेषणम्बा-
च्यम् तथाचात्मत्वहेतौकपिसंयोगात्मकाभावस्य कपिसंयोगान्यक-
पिवृत्तिगुणान्यगुणसामान्याभावाभावस्यैकतया तदीयतादृशगुणसा-
मान्याभावनिष्ठप्रतियोगत्वस्ये दृशाभावावृत्तितयासंग्राह्यत्वान्नव-
त्यव्याप्तिः वृक्षत्वहेतुकेच तादृशगुणसामान्याभावनिष्ठप्रतियोगि
त्वस्य तादृशत्वेन संग्राह्यत्वेऽपि तत्प्रतियोगितावच्छेकावच्छिन्नाधि
करणत्वस्यवृक्षादावुत्पत्तिकालावच्छेदेनसत्वात् । कपिसंयोगान्यक-
पिवृत्तिसमवेतान्यसमवेताभावाभावप्रतियोगितावच्छेदकावच्छिन्ना-
धिकरणत्वसत्वेपि तत्प्रतियोगित्वस्य कपिसंयोगवृत्तिपदार्थविभाजकी-
भूतधर्म्मानधिकरणघटत्ववृत्तिप्रतियोगिताकाभाववृत्तित्वेन धारणा-
सम्भान्नाव्याप्तिरितिग्रन्थासंगतिः नचोक्तसमवेताभावाभावमादायैव-
वृक्षत्वहेतावव्याप्तिरितिवाच्यम अनुयोगिताविशिष्टानुयोगिता नि
रूपितप्रतियोगितानवच्छेदकत्वस्याविवाक्षितत्वात् वैशिष्ट्यंच स्व-
तादात्म्य स्वविशिष्टप्रतियोगितावच्छेदकयत्किञ्चिद्धर्मावच्छिन्नाधि-
करणहेत्वधिकरणवृत्यभावानिष्ठत्वोभयसम्बन्धेन वैशिष्ट्यञ्च स्वाश्रय-
निरूपितत्व स्वाश्रयवृत्तिपदार्थविभाजकीभूत धर्म्मानधिकरणवृत्ति-
प्रतियोगिताकाभावावृत्तित्वोभयसम्बन्धेन तथा च तादृशसमवेता-
भावाभावत्वरूपानुयोताविशिष्टानुयोगिता निरूपितत्वस्य कपिसं-
योगाभावनिष्ठप्रतियोगित्वे विरहान्नाव्याप्तिरति अथात्र समवाय-
सम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावसाध्यकभावत्वे साध्याभाव-
रूपानुयोगित्वस्य निखिलपदार्थवृत्तित्वेन स्वसमानाधिकरणपदार्थ-
विभाजकीभूतधर्मानधिकरणत्वाप्रसिद्ध्या नुयोगित्वान्तरमादायाति-
व्याप्तिः तस्यसत्तामात्रवृत्तित्वे स्वविशिष्टसत्ताभावनिष्ठप्रतियोगित्व-
मादायातिव्याप्तिवारणे प्युक्तप्रमेयाभावस्यस्वरूपाविषयित्वान्यतरस-
म्बन्धेन साध्यतायां सत्ताभावविषयकज्ञानत्वेऽतिव्याप्तिदुर्वारा प्रमे
याभावनिष्ठप्रतियोगितायामुक्तावृत्तित्वरूपाविशेषण विरहात् स-
त्ताभावनिष्ठ प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वस्यहेत्वधि-



करणेविरहाच्च । पटवृत्तित्वविशिष्टघटात्वाभावसाध्यकेऽव्यभिचारिणि
साध्याभाववृत्तिपदार्थविभाजकीभूतधर्मानधिकरणघटत्वनिष्ठप्रतियो-
गिताकाभाववृत्तित्वस्यैवसाध्याभावत्वरूपानुयोगित्वाश्रयनिरूपि-
तप्रतियोगितायांसत्वेनाभावान्तरानुयोगित्वमादायातिव्याप्त्यापत्ति-
श्च अतिव्याप्तिवारणाया श्रितकल्पेऽतिव्याप्तेरिष्टापत्तेरयोगादिति-
चेन्न. अनुयोगितावैशिष्ट्यस्यप्रतियोगितायां स्वाश्रयनिरूपितत्व
स्ववृत्तित्वोभयसम्बन्धेनवाच्यत्वात् वृत्तित्वञ्चस्वनिरूपकत्वस्वाश्र-
यप्रतियोगियत्किञ्चित्वृत्तिपदार्थविभाजकीभूतधर्मानाधिकरणप्रतियो-
गिकाभावाभावावृत्तित्वान्यतरसम्बन्धेन ! तथाचव्यभिचारिणिसा-
ध्यनिष्ठप्रतियगितैवानुयोगिताविशिष्टा कपिसंयोगाभावसाध्यकसद्धे-
तौतादृशगुणसामान्याभावानिष्ठापीतिनासङ्गतिरितिध्येयम् । यत्तु
गुणसामान्याभावस्ययदेकत्वमात्रस्वरूपन्तत्रनानुगतत्वप्रयोजकम् द्र-
व्यत्वादिवदनुगतस्यैकत्वस्याभावा दननुगतस्यापि स्वसत्तायांगुण-
सामान्याभावाभावव्यवहारोत्पादकत्वेनतत्स्वरूपत्वेचविनिगमकाभा-
वान्निखिलगुणात्मकत्वमिति तत्तुच्छम् संख्यारूपत्ववा परिमाणरूप-
त्वम्बा पृथक्त्वरूपत्वम्बेत्यत्रविनिगमकाभावेऽपिसंयोगादिरूपतायां-
लाघवस्यैवविनिगमकत्वात् एकत्वेनचैकेनैवतत्तद्द्रव्येगुणसामान्याभा-
वाभावव्यवहारोपपत्तेः संयोगादिभिस्त्वनन्तैरिति ।

दीधितौयादृशप्रतियोगितेत्यादि; यादृशप्रतियोगितानिरूपिताव-
च्छेदकतावद्धर्मनिष्ठावच्छेदकतानिरूपितनिरूपकताकाधिकरणता-
वान्नेतिप्रतीतिसिद्धस्य प्रतियोगितात्वसमानाधिकरणोभयावृत्तिध-
र्मावच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वानिष्ठा-
वच्छेदकताभिन्नावच्छेदकत्वानिरूपितधर्म्मनिष्ठावच्छेदकताभिन्नाव-
च्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकताभिन्नावच्छेकत्वानि-
रूपितनिरूपकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताधिकर-
णत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकभेदस्य-
हेत्वधिकरणवृत्तेर्निरूपितंयत्प्रतियोगित्वन्तन्निरूपिताधिकरणत्वनिष्ठा-
वच्छेदकतानिरूपितानिरूपकत्वनिष्ठावच्छेकतानिरूपितावच्छेदकत्व-
निष्ठावच्छेदकतानिरूपितधर्म्मनिष्ठावच्छेदकतानिरूपितावच्छेदकत्व-
निष्ठावच्छेदकतारूपितावच्छेदकतावत्प्रतियोगितानवच्छेदकत्वम्बिव-
क्षितं नच महानसीयाभावप्रतियोगितावच्छेदकावच्छिन्नत्वे सति

वन्ह्यभावप्रतियोगितावच्छेदकावच्छिन्ननिरूपकताकाधिकरणतावान्ने·
ति भेदस्यापि तादृशभेदत्वेनलक्षणाक्रान्ततया तन्निरूपितप्रतियोगि·
तानिरूपितपरम्परावच्छेदकतावत्वस्य वन्ह्यभावप्रतियोगित्वेसत्वाद·
व्याप्तिरिति वाच्य मवच्छेदकत्वनिष्ठवच्छेदकताविशिष्टनिरूपकत्वनि·
ष्ठावच्छेदकत्वस्यविवक्षितत्वात् वैशिष्ट्यं च स्वभिन्नावच्छेदकत्वानिरू·
पितत्वसम्बन्धेन। यद्वैकत्ववृत्तित्वंनिरूपकत्वनिष्ठावच्छेदकतायां विशे·
षणं वाच्यम् वृत्तित्वञ्च स्वनिरूपितपरम्परीयोभयावृत्तिधर्म्मनिष्ठा·
वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्व·
सम्बन्धेन तथाचनदोष इति तन्न एकत्वादेः पर्य्याप्त्यनभ्युपगमे·
निवेशासम्भवात्। वस्तुतस्तु निरूपकत्वनिष्ठावच्छेदकतायान्नाकि·
मपिविशेषणादिकंदेयं निरूपकत्वस्ययादृशप्रतियोगितावच्छेदकता·
त्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृतित्वेन यादृशप्रतियोगि·
ता विशिष्टत्वेन वानिशनीयतया निरूपकत्वनिष्ठावच्छेदकताव·
च्छेदकतयाप्रतियोगित्वव्यक्तिद्वयस्य प्रवेशासम्भवात्। किन्तु व
न्ह्यभावप्रतियोगित्वव्यक्तिविशिष्टनिरूपकताधिकरणतावत्वे सति
महानसीयाभावप्रतियोगिताविशिष्टनिरूपकताकाधिकरणतावद्भेदवा·
रणाय तादृशाधिकरणत्वनिष्ठावच्छेदकताविशिष्टत्वं प्रतियोगिता·
यान्निवेश्यं वैशिष्ट्यञ्च स्वभिन्नावच्छेदकत्वानिरूपितत्वसम्बन्धेन।
यद्वाधिकरणत्वनिष्ठा वच्छेदकताद्वयानिरूपितत्वं प्रतियोगितावृत्यु·
भयावृत्तिधर्म्मनिष्ठावच्छेदकताद्वयानिरूपितत्वम्बा विशेषणत·
याप्रतियोगित्वस्योपादेय मितिनकस्याचिद्दोषस्यसम्भवः। इदञ्चा·
धिकरणत्वप्रतियोगित्वावच्छेदकत्वानामधिकरणप्रतियोग्यवच्छेदका·
नां भेदेऽपि नभेदइतिमतेऽन्यथाधूमवान्वह्नेरित्यत्रातिव्याप्तेः धूमाभा·
वप्रतियोगितावच्छेदकावच्छिन्ननिरूपकताकाधिकरणतावद्भेदस्य प्र·
तियोगिताया मधिकरणत्वद्वयादिनिष्ठावच्छेदकतानिरूपितत्वस्य·
सत्वेना वच्छेदकताद्वयस्याधिकरणत्वादिनिष्ठस्य निरूपितत्वसत्वे·
नच धूमत्वावच्छिन्नप्रतियोगित्वस्यलक्षणाघटकत्वा देवं साक्षात्पा
रंपरासाधारणावच्छेदकत्वनिरूपितत्वमभ्युपेत्यैवेदं समुचित मन्य·
थावह्निमान्धूमादित्यत्राव्याप्तेरनुपदोक्तायाअनुद्धारादित्यवध्येयम्॥

अधिकरणतानिरूपितस्वरूपसम्बन्धेनेति, नचाधिकरणत्वीयस्व·
रूपोपादाने प्रतियोगितावच्छेदकतयाऽधिकरणतात्वप्रवेशोव्यर्थ इति



वाच्यम् वाच्यम् प्रमेयत्ववत्वादित्यादौप्रतियोगितावच्छेदकावच्छि·
न्ननिरूपकतानिरूपितप्रमेयत्वनिष्ठाधेयत्वस्यस्वरूपसम्बन्धावच्छिन्न-
निरूपकताकप्रमेयत्वनिष्ठाधिकरणत्वस्यचप्रमेयत्वात्मकतयैकत्वेनप्र·
तियोगिव्यधिकरणाभावाप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् अधिकरणतात्वाव·
च्छिन्नतियोगिकस्वरूपस्यविवक्षणेच वह्न्यभावप्रतियोगित्वस्यापि·
लक्षणघटकत्वापत्तेः प्रतियोगितावच्छेदकावच्छिन्ननिरूपक-
तानिरूपितत्वावच्छिन्नस्य तादृशाधिकरणतात्वावच्छिन्नप्रतियो·
गिकस्वरूपेणसत्वासम्भवादिति अनुगमस्तु प्रतियोगिताविशिष्टप्र-
तियोगिताकाभावत्वेन वैशिष्ट्यञ्च स्वावच्छेदकावच्छिन्ननिरूपकताका-
धिकरणतात्वावच्छिन्नत्व स्वावच्छेदकसम्बन्धावच्छिन्नाधिकरणत्वी-
यस्वरूपसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेति ॥

तेनायः पिण्डस्यापीति, सम्बन्धसामान्येनप्रतियोगितावच्छेदकाव·
च्छिन्नत्वाविवक्षायामेवैतद्दोषस्यप्रदर्शिततया कथंतत्सम्भवःप्रतियोगि·
व्यधिकरणाभावाप्रसिद्धेरितिचेत् तद्योगोलकसंयुक्तासमानकालीन·
तद्व्यक्त्यवच्छिन्नाभावस्यैवप्रतियोगिव्यधिकरणत्वसम्भवा त्तत्प्रतियो·
गितैवलक्षणघटिका स्ववृत्तिवाच्यत्वादिकन्तु न संसर्गः अत एव वह्निमा·
न्धूमादित्यादावव्याप्तिसम्भवेऽतिव्याप्तिदानमनुचितमितिनिरस्तम्।
नचैवमपिद्रव्यमात्मत्वादित्यादावव्याप्तिः विषयितयाज्ञानस्याभावमा·
त्रप्रतियोगितावच्छेदकावच्छिन्नत्वादिति वाच्यम्। विषयित्वस्येदा·
नींसंसर्गत्वानभ्युपगमात्। अधिकरणतानिरूपकतावच्छेदकसम्बन्ध-
समान्येनैवप्रतियोगितावच्छेदकावच्छिन्नत्वस्यवावाच्यत्वात्। नच·
तथाप्यात्मनिवस्तुमात्रसमानकालीनस्य कस्यचिद्विशेषगुणस्यसर्व·
दैवसत्वादव्याप्तितादवस्थ्यमिति वाच्यम्। चरमध्वंसावच्छिन्नाव·
च्छिन्नाभावप्रतियोगित्वस्यैवलक्षणघटकत्वसम्भवादिति ध्येयम्॥०॥

यदवच्छेदकत्वंतन्निरूपितस्वरूपेति, अत्रावच्छेदकतात्वावच्छि·
न्नप्रतियोगित्वप्रवेशफलमधिकरणतात्वावच्छिन्नतियोगित्वप्रवेशफ-
लवदेव बोध्यम्।

अत्रयादृशप्रतियोगितावच्छेदकधर्म्मइत्यादि, अत्रैतत्कल्पपरिष्कार-
श्च हेत्वधिकरणत्वपरिष्कारवत् तत्रसद्धेतावेवप्रायोऽहेत्वधिकरणस्य·
हेत्वधिकरणत्वापत्त्याव्याप्तिपरिहारः फल मत्रप्रायोव्यभिचारिणिसा-
ध्याभावप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वस्यहेत्वधिकरणे·

प्रसङ्गेनातिव्याप्तिपरिहारः द्रव्यानुयोगिकसमवाय विशिष्टसत्तात्वाव-
च्छिन्ननिरूपितप्रकारितान्यतरसम्बन्धेन सत्तासाध्यकविशिष्टसत्त्व-
प्रकारकज्ञानत्वहेतुके ऽतिव्याप्तिवारणञ्च द्रव्यत्वसाध्यकउक्तान्यत-
रसम्बन्धेनसत्वेसद्धेतौ हेत्वधिकरणत्वपरिष्कारप्रदर्शिता व्याप्तेः प्रद-
र्शितवारणरीत्याकार्यं समवायेनघटत्वपटत्वोभयसाध्यकव्यभिचारि-
ण्यतिव्याप्तिश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धितावच्छेद-
कत्वस्य साध्यतावच्छेदकाविशेषणतामभ्युपेत्यवारणीया। यत्तु प्र-
मीयप्रकरतावच्छेदकत्वविशेषणेनतद्वावारणं कार्यमिति तन्न तथासति-
प्रतियोगितावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यत्वस्य प्रमीय-
विशेष्याताप्रतियोगिकस्वरूपेणाभावस्य लक्षणघटकत्वापेक्षायानिर्वी-
जत्वापत्ते रस्मत्कल्पेच प्रमीयत्वप्रवेशेनगौरवस्यैवतदुपेक्षावजित्व-
सम्भवात्—तत्त्वोक्तविशेष्यत्वाभावश्चतादृशविशेष्यतात्वेतरधर्म्मान-
वच्छिन्नतादृशविशेष्यतात्वावच्छिन्नप्रतियोगिताकएवविवक्षणीयः—स
च्चोक्तविशेष्यतात्वावच्छिन्नप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियो-
गिताकः केवलान्वयीति प्रतियोगितामात्रस्यलक्षणघटकत्वापत्तिरिति
च्यम् संसर्गीयप्रतियोगितायामुक्तविशेषतात्वावच्छिन्नत्वस्याप्रवेश्य-
त्वात्वात् नचवह्नीयसंयोगेनसाध्यतायांसद्धेतौ प्रतियोग्यधिकरणाप्रसि-
द्धिः—स्वाश्रयाधिकरणत्वस्यावश्यंसाध्यतावच्छेदकसम्बन्धेनवाच्य-
त्वात्–अन्यथाधूमवान्वह्नेरित्यत्रधूमाभावस्यप्रतियोगिवैयधिकरण्या-
नुपपत्त्याऽतिव्याप्तिः स्यादिति वाच्यम्। प्रतियोगितावच्छेकतात्वा-
वच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपविशिष्टाधिकरणत्वस्य साध्य-
तावच्छेदकसम्बन्धावच्छिन्नाधिकरणत्वीयस्वरूपसम्बन्धेनाभावस्य
विवक्षितत्वात् वैशिष्ट्यञ्च स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियो-
ग्यवच्छेदकताकत्व स्ववृत्तित्वोभयसम्बन्धेन वृत्तिताच स्वाभाववत्त्व-
सम्बन्धेना भावश्च स्वसमानाधिकरणसाध्यतावच्छेकसम्बन्धाव-
च्छिन्नाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगि-
तानवच्छेदकत्व स्वकालीनसाध्यतावच्छेदकसम्बन्धावच्छिन्नाधि-
करणतानिरूपकतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदक-
त्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकोबोध्य इति ॥ ० ॥

सर्वत्रासम्भव इति, इदमिदानींप्रकारित्वादिनाव्याप्यव्यापकभा-
वाङ्गीकारेणा न्यथाप्रकारितासम्बन्धेनघटसाध्यकतज्ज्ञानत्वेऽव्या-



प्त्यसम्भवेनासम्भवासङ्गत्यापत्तेरिति—

अतिप्रसङ्गादिति, नचप्रमेयवद्भावप्रतियोगित्वस्यतत्तत्प्रतियो-
त्वाभिन्नतत्तद्धर्मस्वरूपत्वेन तत्प्रतियोगित्वाभिन्नतया ऽसम्भवएवा-
त्रापिसम्भवतीतिवाच्यं स्वाभिन्नस्वावच्छेदकत्वस्यविवक्षणेऽसम्भ-
वासम्भवान्नचकालिकोऽपिसम्बन्धोघटाद्यभाप्रतियोगिताघटक स्ते-
नचघटत्वाद्यवच्छिन्नाधिकरणत्वमेवहेत्वधिकरणमिति वाच्यम्।
तत्पर्वतासमानकालीनव्यक्त्यभावप्रतियोगित्वस्यैवलक्षणघटकत्वस-
म्भवात् नचकालिकेनतादृशतद्व्यक्तित्वविशिष्टाभावप्रतियोगित्वस्य-
तत्प्रतियोगित्वेनसहैक्या त्स्वावच्छेदकताघटककालिकेनप्रतियोगि-
तावच्छेदकतद्व्यक्तित्वस्यपर्वतसमानकालीनेऽपिसत्वादप्रसिद्धिरिति-
वाच्यम् तद्व्यक्तित्वस्यतद्व्यक्त्यात्मकत्वा त्तद्व्यक्तिविशिष्टाभावस्यल-
क्षणघटकत्वा त्प्रतियोगित्वस्य प्रतियोगितावच्छेदकताघटकसंस-
र्गं प्रतियोगितावच्छेदकोभयात्मकत्वाभ्युपगमेन तत्प्रतियोगित्वयो-
रैक्यासम्भवाच्च नचप्रतियोगितावच्छेकसम्बन्धात्मकत्वं सं-
योगेनरूपाभावप्रतियोगित्वस्यरूपेऽसत्वप्रसङ्गादिति भावः।

यद्भावीययत्प्रतियोगितेति; यद्भावीयत्व यत्प्रतियोगितात्वो-
भयधर्म्मावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावदवच्छेदकतावत्स-
म्बन्धेनयद्भावीयत्वयत्प्रतियोगितात्त्वोभयधर्म्मावच्छिन्ननिरूप्यतानि-
रूपितनिरूपकतावदवच्छेदकतावद्धर्मावच्छिन्नानधिकरणत्वमित्यर्थः॥

प्रतियोगिमत्त्वादिति, प्रतियोगित्वस्योभयत्वरूपत्वे प्युभयत्व-
त्वेनैवतदवच्छिन्नाधिकरणत्व म्प्रत्येकवद्देशावृत्ति नतुप्रतियोगिता-
त्वेन प्रत्येकवद्देशेप्युभयाभावप्रतियोगिमँदिति प्रतीतेरितिभावः।

बिरोधस्यसाक्षादनुमितावेवाविरोधित्वमतमालम्ब्याहयदिचेति,
अतिप्रसङ्गभङ्गादिति, विरोधस्थलइति शेषः तेनप्रवेशादेवेत्यत्रनै
वकारव्यवच्छेद्यासम्भवः। साध्यसामानाधिकरण्यस्यसम्बन्धवि-
शेषनियन्त्रितस्यापिसाधारणहेतुसाधारणत्वादिति ॥

मानाभावस्येति, अत्यन्ताभावप्रतियोगितायां सम्बन्धावच्छि-
न्नत्वसाधकस्य प्रतिवध्यप्रतिबन्धकभावाद्यनुपपत्यादेर्भेदस्थलेऽव-
तारासम्भवात्। सम्बन्धस्यैकप्रतियोगिकत्वापरानुयोगिकत्वनियमे-
न तादात्म्यस्यसम्बन्धत्वाभावाच्च—घटोद्रव्यमित्यादिशाब्दस्यच
प्रथमार्थतादात्म्यप्रकारकत्वं सम्बन्धानवच्छिन्नप्रकारकत्वम्बाभ्युपे-

यं प्रकारतात्वादिकन्तुविषयतात्वव्याप्यधर्म्मविशेषएवेति सम्बन्धानवच्छित्वेऽपिनतत्रप्रकारतात्वक्षतिः । अस्तुवासम्बन्धावच्छिन्नैवतत्प्रकारता तथापि प्रतियोगितायाः तदभ्युपगमोऽप्रामाणिकएवेतिभावः । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमेवभेदत्व न्नत्वनुयोगितविशेषः प्रमाणाभावादितिमतेऽप्याह एवमिति, स्वामित्वादिसम्बन्धस्यप्रतियोगितावच्छेकत्वेमानाभावादितिशेषः ॥

सम्बन्धान्तरावच्छिन्नतत्तदनन्तेति, ननुप्रतियोगितावच्छेदकत्वस्योपलक्षकतयैवनिवेश्यत्व मन्यथाप्रमेयधूमहेतुकस्थले गुरुधर्मस्यप्रतियोगितानवच्छेदकत्वपक्षे ऽव्याप्तेश्चेतिकथंगौरवमितिचे दत्र केचि त्प्रतियोगितायांसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वप्रवेशो कम्बुग्रीवादिगुरुधर्म्मभेदस्यनप्रवेशो ऽन्यथाविषयित्वादिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य कम्बुग्रीवादिमत्वेऽपिसत्वेन तद्भेदस्यप्रवेशनीयतयाँ गौरवमितिवदन्तिं । अत्रब्रूमः साध्यतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छेदेन पर्य्याप्तिसम्बन्धावच्छिन्नतादृशप्रतियोगितावच्छेदकत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदकूटस्य साध्यतावच्छेदकनिष्ठस्य चक्रवर्त्तिलक्षणोक्तत्वेन दीधितकृत्सम्मतस्य लक्षणघटकतामभ्युपेत्यगौरवोद्भावनंकृतं तच्चस्फुटमेव तत्तत्सम्बन्धावच्छिन्नप्रतियोगित्वस्य स्वप्रतियोगितावच्छेदकघटकतयाभिन्नस्य घटत्वादिभेदस्यलक्षणघटकत्वात् नचोक्तप्रतियोगितावच्छेदकत्वावच्छिन्नभेदनिवेशनमप्रयोजन म्महानसीयवन्ह्यभावप्रतियोगित्वस्यसाध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वविशेषणेनैववारणादितिवाच्यं तद्विशेषणोक्तेश्शिष्यबुद्धिवैशद्यार्थतायाःप्राक्प्रपञ्चित्वात् । पूर्वंतद्विशेषणमव्याख्यानरूपग्रन्थेशङ्कोत्तरक्रमेणाभिहित मिदानींदीधितिव्याख्यानेतत्सम्मतविशेषानुरसणमेवयुक्तमित्यस्यापिवक्तुंशक्यत्वाच्च । अतएव संबन्धान्तरावच्छिन्नतत्तदनन्तप्रतियोगितावच्छेदकभेदकूटेत्यादिलिखनमपिसङ्गच्छते—अन्यथाप्रतियोगितागतानन्त्यम्विहायधर्म्मगतानन्त्यमेवोच्येतेति ॥ ० ॥

अथस्वावच्छेदकावच्छिन्ननिरूपकताकाधिकरणतावान्नेतिप्रतीतिसिद्धोयोहेत्वधिकरणवृत्तिभेद स्तदीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्प्रतियोगितावच्छेदकतावान्नेतिसामान्यभेदएवनिवे



श्य स्तत्रनगौरवःप्रसरः अत्रहेत्वाधिकरणवृत्तिघटाधिकरणत्वाविशिष्टभेदतत्प्रतियोगित्वघटाधिकरणत्वनिष्ठावच्छेदकत्वघटत्वावच्छिन्ननिरूपकत्वानिष्ठावच्छेदकत्वघटत्वानिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वघटत्वात्मकधर्म्मनिष्ठावच्छेदकत्वघटत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वघटनिष्ठप्रतियोगितानिष्ठावच्छेदकत्वघटनिष्ठप्रतियोगित्वघटत्वनिष्ठावच्छेदकत्वादिघटितविशेषावच्छेदकावच्छिन्नप्रतियोगिताकभेदानवच्छेदकघटोभयभेदश्चादायातिव्याप्तिवारणाय तत्तदवच्छेदकनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्व न्तद्यक्तेःस्वरूपतोभानेऽतिव्याप्तिवारणाय तत्तन्निष्ठावच्छेदकतानिरूपितत्वञ्चनिवेश्य मेवमेवभट्टाचार्य्येणसामान्यभेदनिवेशःकृतः तत्रस्वावच्छेदकावच्छिन्नवत्वसम्बन्धस्य परम्परात्मकस्य यद्धेत्वधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वेनोपादानम् तल्लाघवलोभेन नतु प्रकारविधयाप्रवेशस्यासम्भवेन हेत्वधिकरणवृत्तिभेदप्रतियोगित्वस्य स्वावच्छेदकाघटकशेषनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वाविशेषितावच्छेदकतानिरूपितस्योपादेयत्वेऽपि तत्कोटौतत्तत्प्रतियोगित्वानिष्ठावच्छेदकतानां । प्रतियोगित्वत्वसामानाधिकरण्येनोपादेयत्वेनो नुगमस्याभावादि चेन्न हेत्वधिकरणवृत्तिसामान्यभेदप्रतियोगितावच्छेदकत्वेनानुगतरूपेण प्रतियोगित्वस्यानुपादेयताया मतभेदेनप्रागुक्तत्वात् । अतएव नहेत्वाधिकरणवृत्तितावच्छेदककूटत्वप्रतियोगिकपर्याप्त्यनुयोगितानिरूपितपरम्परावच्छेदकतावत्वेनप्रतियोगित्वानुगमश्शक्यः । एवञ्च तन्मतावलम्बनेनापिपरम्परासम्बन्धानुधावनंभट्टाचार्यस्येत्यपियुज्यतेवाचोयुक्तिः । अथवैतद्ग्रन्थस्यतादृशावच्छेदकत्वावच्छिन्नभेदनिवेशाभिप्रायकतायाःप्रागुक्ततया सामान्यभेदनिवेशेधूमवान्वह्नेरित्यादिव्यभिचारिण्यतिव्याप्तेः । उक्तावच्छेदकतावत्प्रतियोगितावच्छेदकतात्वेन तादृशावच्छेदकतायाव्यासज्यवृत्तित्वा न्नचभट्टाचार्याणांसामान्यभेदोक्तिरसंगता स्वावच्छेदकतापर्य्याप्त्यधिकरणत्वरूपपरम्परायास्संसर्गतामभ्युपेत्यतादृशप्रतियोगिताविशिष्टान्यत्वनिवेशेतस्यतात्पर्यादितिध्येयम् ॥ ० ॥

ध्येयमिति, अन्योन्याभावत्वस्यानुयोगिताविशेषरूपत्वेनवैयर्थ्यसम्भवइतिचिन्ताबीजम् ।

इत्यपिवदन्तीति, व्याप्तेरेकरूपत्वाभावप्रसङ्गसूचनायापीति ॥

अनुमितिरप्यनुपपन्नेति, तथाचगोविधेयकानुमितेरप्यभ्युपगमे गवेतरावृत्तित्वरूपायानिरवच्छिन्नगोत्वविधेयकानुमितिप्रयोजकव्याप्तेरुपस्थितिध्रौव्ये गोविधेयकत्वेनाभिमतानुमितावपि गोत्वविधेयकत्वस्यसम्भवेन गोस्साध्यत्वमप्रामाणिकमेवेतिभावः। ननुगोत्वत्वघटकगवेतरावृत्तित्वस्य समवायसम्बन्धावच्छिन्नवृत्तित्वप्रतियोगिकत्वा त्सास्नानिष्ठस्य व्याप्तिरूपस्य समवेतत्वसम्बन्धावच्छिन्नवृत्तित्वप्रतियोगताकत्वा दुभयोर्भेदे गोत्वत्वोपस्थितेः कथंव्याप्त्युपस्थितिरूपत्वमितिच द्गोस्तादात्म्येनसाध्यत्वे समवायेनैवसास्नायाइहहेतुत्वं गोपदञ्चपृथिवीपरं तथाचव्याप्तेर्गोत्वत्वघटकत्वान्निरावाधमितिनासङ्गतिरितिकेचित्। परेतु साध्यवदन्यावृत्तित्वरूपव्याप्तिपरामर्षस्यतादृशव्याप्त्यवच्छिन्नप्रकारताशालिनिश्चयत्वेनैवकारणत्व न्नतत्रव्याप्तिधर्मितावच्छेदकतात्मकविषयत्वस्यप्रवेशोऽनावश्यकत्वात्। तथाचगवेतरासमवेतत्वोपस्थितौ तदवच्छिन्नगोरूपादेः रूपत्वमविषयीकृत्य परमर्षा दनुमिते गोत्वविधेयकत्वसम्भवान्नासङ्गतिः। अतएव तद्विशिष्टस्यन यत्र पक्षधर्म्मताधीरित्येववक्ष्यति नतु तद्विशिष्टस्यसास्नादेरितीति प्राहुः ॥ ०॥

व्यापकत्वंवाच्यमित्याशयइति। इदमुपलक्षणं गोत्वत्वानुपस्थितावपिनिरवच्छिन्नगोत्वनिष्ठावच्छेदकताकविधेयताशाल्यनुमितेस्साध्यविशेष्यकहेतुमन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वज्ञानादपिसम्भवोवोध्यः नचैवंव्यापकत्वज्ञानकारणत्वपक्षे स्वरूपतोज्ञानत्वादिप्रकारकानुमित्यनुपपत्तिरूपदोषप्रतिपादककेवलान्वयिग्रन्थविरोधइतिवाच्य मुक्तव्यापकत्वस्यावच्छेदकतानवच्छेदकधर्मावच्छेदेनावच्छेदकत्वाभावस्यसत्वएवतत्तत्साध्यवद्भेदप्रतियोगितावच्छेदकेनिर्वाह्यतया प्रतियोगितानवच्छेदकधर्म्मावच्छेदेनप्रतियोगित्वाभावस्यैवावच्छेदकत्वाभावस्याप्यनभ्युपगमे तद्व्यापकत्वस्यासम्भवेन तदभिप्रायकत्वात्केवलान्वयिग्रन्थस्येत्यसङ्गतेरभावादिति।

तच्चिन्त्यमिति, सम्बन्धधर्मिकव्यापकताग्रहस्य सम्बन्धिविधेयकानुमितेरपिहेतुत्वे कदागोतादात्म्यवानित्यनुमितिः कदायज्ञोरित्यनुमितिरितिनियमाभावप्रसङ्गेन तस्याकारणत्वे तदवलम्बनेन व्याख्यानस्यानुचितत्वमिहाचिन्तावीजम्।



इत्यपिवदन्तीति, धर्म्मिभेदधर्मात्यन्ताभावयोरेकतयाभेदबुद्धेरिवात्यन्ताभावबुद्धेरपिविरोधित्वमानुभविकमिति गोत्वत्वावच्छिन्नाभावनिश्चयदशायां तादृशानुमित्यसम्भवएवास्वरसोऽपिनासूचितइति। कचित्पुस्तकेप्रतियोगिताधर्म्मिकोभयाभावघटितलक्षणाभिप्रायेण गोत्वत्वाद्यग्रहदशायामित्यादिग्रन्थव्याख्यानमस्ति तस्यायमाशयः अनुव्यवसायानुरोधेनोल्लेखमानस्यापिजातेर्निरूपितत्वादिसम्बन्धेनस्वरूपतोभाने प्रकारित्वइवावच्छेद्यत्वेपिनिरूपितत्वसम्बन्धेनस्वरूपतोभानंस्वीक्रियत इतिगोत्वत्वाद्यनुपस्थितावपि गोविधेयकानुमित्युपयोगिव्याप्तिग्रहस्यसम्भवइति नचैवंकेवलान्वयिग्रन्थस्वरूपतोज्ञानत्वादिप्रकारकानुमित्यनुपपत्तेर्व्यापकताज्ञानकारणत्वपक्षउद्भाविताया असङ्गतिरितिवाच्य मवच्छेद्यत्वेनिरूपितत्वसंबन्धेनस्वरूपतोभानानभ्युपगमेनतदुक्तेस्सङ्गतत्वसम्भवादिति।

वस्त्वन्तरइति, विभुरूपइत्यर्थः। विभुद्वयसंयोगस्यानङ्गीकारादितिभावः। गगनासंयुक्तपृथिव्युत्पत्तौ पृथिवीत्वादीत्यत्रगगनसंयुक्तमात्रवृत्तिधर्म्मोपग्रहायादीत्युक्तमिति।

दीधितौकिमपिव्यापकन्नस्यादिति,। अथात्रमहाकालत्वसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वरूपव्यापकतावच्छेदकत्वाभावः कालिकसम्बन्धावच्छिन्नाव्याप्यवृत्तितावच्छेदकआपाद्यते। आपादकश्च महाकालवृत्तिभेदप्रतियोगितावच्छेदकाधिकरणतानिरूपकतानवच्छेदककालिकसम्बन्धावच्छिन्नाव्याप्यवृत्तावच्छेदकत्वम्महाकालवृत्तिभेदीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्प्रतियोगितानवच्छेदकसम्बन्धावच्छिन्नाव्याप्यवृत्तितावच्छेदकत्वम्वा सचनसम्भवति आपाद्याप्रसिद्धेः। नचस्वसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकमहाकालत्वाभावआपाद्यः उक्तसम्बन्धस्यतत्क्रियात्वादेःप्रसिद्धत्वेनतेनमहाकालत्वाभावोनाप्रसिद्धइतिवाच्य मिष्टापत्तेः। नचप्रतियोगिवैयधिकरण्यपदार्थत्वेनप्रवेशेनेष्टापत्तिरितिवाच्यं तथापीदानीम्प्रतियोगिवैयधिकरण्यान्तरस्याज्ञायमानतया पाद्यव्यतिरेकनिष्ठस्यासम्भवेना पत्तिकारणस्याभावादिति चेन्न व्यापकत्वशब्दार्थताम्पक्षीकृत्य साध्यतावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वादिरूपप्रतियोगिवैय-

धिकरण्यघटितवृत्तित्वेनापादके नोक्तनिरूपकतानवच्छेदककालिकसम्बन्धावच्छिन्नाव्याप्यवृत्तितावद्वृत्त्यवृत्तित्वमेवह्यापाद्यते घटादिसाध्यकमहाकालत्वादेःसद्धेतुत्वनिश्चयादेवं घटादौमहाकालत्वव्यापकत्वस्यनिश्चयेनापाद्यव्यतिरेकनिश्चयसम्भवात् । उत्तरग्रन्थेनप्रतियोगिवैयधिकरण्यान्तरस्यव्यापकत्वघटकस्यप्रतिपादनेनापादकासत्वप्रतिपादनमेवकरिष्यतइति । यद्वामहाकालत्वलिङ्गकघटादिविधेयकानुमितिर्यदि निरूप्यनिरूपकभावापन्नविषयताकमहाकालत्वसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकघटत्वावच्छिन्नसमानाधिकरणमहाकालत्ववानयमितिपरामर्षजन्यास्या दभ्रान्तपुरुषवृत्तिर्नस्यादित्यापादनेतात्पर्यं । उत्तरग्रन्थेप्रतियोगिवैयधिकरण्यान्तरप्रतिपादनेन तद्घटितव्यापकताज्ञानस्यकारणत्वप्रतिपादनापादकासत्वसूचनेनापत्तिर्निराकरिष्यतइति । केचित्तु विधेयतावच्छेदकत्वस्यव्यापकतावच्छेदकत्वनियतत्वेन तदभावप्रतिपादनेनोक्तनिरूपकतानवच्छेदककालिकसम्बन्धावच्छिन्नाव्याप्यवृत्तितावच्छेदकघटत्वंमहाकालत्वलिङ्गकप्रमानुमितीयकालिकसम्बन्धावच्छिन्नविधेयतावच्छेदकत्वाभावएवोक्तानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकव्यापकत्वविषयतानिरूपितविषयत्वस्यप्रमीयविषयत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावेनापादकेनापाद्यते व्यापकतावच्छेदकत्वविषयताच निरूप्यनिरूपकभावापन्नाग्राह्येतिनाप्रसिद्धिः उत्तरग्रन्थेनकारणीभूतज्ञानस्यविषयसिद्धिद्वाराप्रमात्वप्रतिपादनेनापत्तिनिराकरिष्यतइतिवदन्ति ।

तदनधिकरणदेशेति, देशपदोपादाना दधिकरणत्वस्यावच्छेदको दैशिकसाक्षात्सम्बन्धोलभ्यते तेनदेशस्यकालिकेनाधिकरणत्वेपिनक्षतिर्नवा देशपदवैयर्थ्यमिति ।

देशाप्रसिद्ध्यातदवच्छेदेनेति, वाच्यत्ववत्वंयतोनकिञ्चिन्निष्ठाधिकरणतानिरूपकतानवच्छेदक मतोनमहाकालनिष्ठाभावप्रतियोगितावच्छेदकमितितात्पर्य्यार्थः तेनाप्रसिद्धस्यावच्छेदकत्वासम्भवेपिनक्षतिः ।

महाकालान्यत्वविशिष्टघटाभावेति, ननुघटवान्महाकालत्वादित्यत्राव्याप्तेरेवपूर्वमुक्ततया तत्स्थलएवाव्याप्तिवारणाशंकायुक्ता साचासम्भाविनी उक्तप्रतियोगित्वे साध्यतावच्छेदकतदितरोभया-



नवच्छिन्नत्वरूपविशेषणाविरहात् तस्यलक्षणघटकत्वेच तदवच्छेददकत्वस्यैवसाध्यतावच्छेदकेसत्वादितिचेन्न कालोघटवान्महाकालत्वादित्यादावित्यत्रादिपदस्यप्रागुक्ततया महाकालान्यत्वविशिष्टघटाद्यभावेत्यत्राद्यादिपदस्योक्ततयाच घटसाध्यकेमहाकालान्यत्वविशिष्टपटाभावं पटसाध्यकेमहाकालान्यत्वविशिष्टघटाभावञ्चादायाव्याप्तिवारणएवग्रन्थतात्पर्य्यात् । पृथिवीत्वव्याप्यघटत्वविशिष्टसाध्यके महाकालान्यत्वविशिष्टतेजस्त्वव्याप्यघटत्वविशिष्टाभावमादायाव्याप्तिवारणेवाग्रन्थतात्पर्य्यादिति ।

सुलभइति, नचमहाकालान्यत्वविशिष्टघटस्य महाकालावृत्तित्वएवा भावःप्रतियोगिव्यधिकरण स्तस्यसत्वे महाकालस्य जगदाधारत्वप्रवादव्याकोपइतिवाच्यम विशिष्टस्यानतिरिक्ततया कालिकेनविशेषणविशेष्योभयाधिकरणतयैवसर्वाधारत्वोपपत्तेरितिभावः ।

तथासतिकालमात्रवृत्तिधर्म्मस्येति, मात्रपदोपादानात् कालवृत्त्युभयावृत्तिधर्म्मस्यहेतुत्वं धर्म्मपदोपादानाच्च येनसम्बन्धेनतन्मात्रवृत्तित्वं तेनैवसम्बन्धेनहेतुत्वञ्च लभ्यते तथाचकालवृत्त्युभयावृत्तिधर्म्ममात्रस्यैवविशेषणताविशेषणस्वाश्रयनिरूपितविशेषणतयाकिमपिव्यापकन्नस्यादित्यर्थः तत्रधर्म्मस्यविशेषणताविशेषेणेत्युक्तौ विशेषणतानिष्ठस्यप्रकृतहेत्वाश्रयनिरूपितत्वरूपस्य विशेषणस्यैवलाभेन कालत्वाश्रयनिरूपितविशेषणतया घटादिसाध्यककालत्वादिहेतोरप्युद्देश्यतया तत्राव्याप्तिविरहेणन्यूनतास्यादितिकालमात्रवृत्तीति । प्रकृतहेत्वाश्रयनिरूपितत्वपरिशेषस्यैवविवक्षितत्वे ऽष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्म्मस्यहेतुतायां महाकालनिरूपितविशेषणत्वमेवलभ्यत इत्याशयेनविशेषणताविशेषपदेनमहाकालीयविशेषणतोक्ता । एवञ्चमहाकालीयविशेषणतयाऽव्याप्यवृत्तिकिमपिव्यापकन्नस्यादिति कथन्नोक्तमित्याशङ्काप्यपास्ता, महाकालीयविशेषणतात्वेनशब्दानुपादेयत्वेनयथाश्रुतंवैयर्थ्याभावादित्याशयः ।

सन्दर्भविरोधापत्तेरिति, तथाचाविशेषरूपेणसंसर्गत्वानभ्युपगमाभिप्रायकत्वमनुसृत्य विशेषणतानिष्ठस्यकालिकत्वस्यैवविशेषपदार्थतायावाच्यतया कालिकविशेषणतयासाध्यतायांनाव्याप्तिरितिभावः ।

अष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्म्मेत्यन्तं विशेषपदस्यमहाकालीयत्वरूपविशेषेतात्पर्य्यग्राहकामितिनवैयर्थ्यसम्भवइतिय-

दिग्रूया त्तदाप्याह स्वरूपसम्बन्धेनेति ।

पूर्वपक्षस्यैवेति, सम्बन्धधर्म्मिकोभयाभावघटितकल्पस्यैवेत्यर्थः ।

स्वरसतइति, महाकलत्वावच्छिन्नविषयकत्वेनानुव्यवसीयमानतयेत्यर्थः ।

पटध्वंसविशिष्टइति, इदानींपटध्वंसइतिप्रतीते स्तत्तत्क्रियाविशिष्टमहाकालेऽधिकरणत्वावगाहिन्याविशेषणेऽधिकरणत्वानवगाहित्वइत्यादिः ।

एकव्यक्तिमात्रवृत्तिसाध्यकेऽप्यव्याप्तिग्राहयितुमाह उभयत्वेनेति, यत्तु महानसीयत्वस्यमहानसवृत्तित्वरूपतया तदवच्छिन्नप्रतियोगितायां साध्यतावच्छेदकताघटकसम्बन्धानवच्छिन्नावच्छेदकत्वानिरूपितत्वविरहेण लक्षणाघटकत्वादाह वह्निघटोभयत्वेनेति, नचोभयत्वमपिपर्य्याप्तिसम्बन्धेनैवावच्छेदक मितितदवच्छिन्नाभावोनलक्षणघटकइतिवाच्यं धर्म्मत्रयस्यावच्छेदकत्वस्थले समवायेनोभयत्वस्यावच्छेदकत्वेपि क्षत्यभावादिति तत्तुच्छं महानससंयोगविशिष्टवह्न्यभावस्यापिमहानसीयवह्न्यभावत्वेनतदवारणादिति ।

यत्रसमवायेनघटत्वादिविशिष्टस्येति; इदञ्चाकिमपिव्यापकन्नस्यादित्यत्र किंशब्दस्य समवायादिसम्बन्धेनधर्म्मविशिष्टार्थतामभ्युपेत्य तेनस्वरूपसम्बन्धेनाकिञ्चिद्विशिष्टसाध्यकस्थलेऽव्याप्त्यभावेपिनक्षतिः ॥

स्वरूपसमवायाभ्यामेवतथात्वादिति; अथमहाकालान्यत्वाविशिष्टघटत्वावच्छिन्ननिरूपकतायाअपि साध्यतावच्छेदकताघटकसमवायसम्बन्धावच्छिन्नघटत्वानिष्ठावच्छेदकताकतयाकथन्तद्वारणमिति चे दत्रकोचि द्वह्नित्वनिष्ठावच्छेदकतानिरूपितासती महानसीयत्वनिष्ठावच्छेदकताकनिरूपकताया वह्न्यभावप्रतियोगितावच्छेदकावच्छिन्नतया तद्वारणाय साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वानिष्ठावच्छेदकतानिरूपितासती प्रतियोगितावच्छेदकतासमानाधिकरणाधेयत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिता या वच्छेदकता तद्भिन्ननिरूपकत्वानिष्ठावच्छेदकताभिन्नावच्छेदकतानिरूपितत्वेन भेदः प्रतियोगितानिरूपितनिरूपकत्वानिष्ठावच्छेदकताया उपादेयतथा महाकालान्यत्वनिष्ठावच्छेदकताया अधिकावच्छेदकत्वेन' तादृशनिरूपकताकाधिकरणतावच्छेदस्य लक्षणाघटकत्वात् ।



नचनिरूपकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकताप्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकताभिन्नत्वेनाप्युपादेया तथाचमहाकालान्यत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतायाउक्तभेदवत्वविरहेणमहाकालान्यत्वाविशिष्टघटत्वावच्छिन्ननिरूपकताकाधिकरणतावच्छेदस्यलक्षणघटकत्वसम्भवः ॥ यद्वा साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिरूपितत्वं स्वातन्त्र्येणैवनिरूपकत्वनिष्ठावच्छेदकताविशेषणत्वेनोपदेय न्नतु प्रतियोगितावच्छेदकतानिष्ठावच्छेदकतायां भेदप्रतियोगित्वेनोपात्ताया मितिमहाकालान्यत्वविशिष्टघटत्वावच्छिन्ननिरूपकताकाधिकरणतावच्छेदस्य लक्षणघटकत्वसम्भवइति वाच्यम् । कालिकेनरूपत्वविशिष्टसाध्यकपृथिवीत्वे विषयितयारूपत्वविशिष्टाभावप्रतियोगितावच्छेदकावच्छिन्ननिरूपकतायाः कालिकसम्बन्धावच्छिन्नरूपत्वनिष्ठावच्छेदकतानिरूपितविषयित्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिताया हेत्वधिकरणवृत्त्युक्तभेदप्रतियोगितावच्छेदकत्वेनाव्याप्तेः । अथ प्रतियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकतायां साध्यतावच्छेदकताविशिष्टान्यसाध्यतावच्छेदकनिष्ठावच्छेदकत्वानिरूपितत्वं विशेषणम्वाच्य मन्यथा घटान्यत्वविशिष्टवाच्यत्वसाध्यकद्रव्यत्वे साध्याभावप्रतियोगितावच्छेदकावच्छिन्ननिरूपकतात्वस्य सामानाधिकरण्यसम्बन्धावच्छिन्नवाच्यत्वत्वनिष्ठावच्छेदकतानिरूपितस्वरूपसम्बन्धावच्छिन्नघटान्यत्वनिष्ठावच्छेदकतानिरूपितनिरूपकतायामपिसत्वेन तादृशनिरूपकताकाधिकरणतावच्छेदस्य हेत्वधिकरणेसत्वायोगादतिव्याप्त्यापत्तेः । नचोक्तरूपवृत्तित्वनिष्ठावच्छेदकतानिरूपितासती साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकत्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताधिकरणत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकत्वेनैव भेद उपादेयः । तथाचोक्तरूपवृत्तिसामानाधिकरण्यसम्बन्धावच्छिन्नघटभेदनिष्ठावच्छेदकतानिरूपितस्वरूपसम्बन्धावच्छिन्नवाच्यत्वत्वनिष्ठावच्छेदकतानिरूपितनिरूपकताकाधिकरणतावच्छेदस्याप्युक्तभेदत्वावच्छिन्नतयाहेत्वधिकरणवृत्तित्वान्नातिव्याप्तिरिति वाच्यम् । स्वरूपेणघट-

भेदविशिष्टत्वेसति सामानाधिकरण्यसम्बन्धेनवाच्यत्वत्वविशिष्ट-
साध्यकद्रव्यत्वेसद्धेतौ साध्याभावप्रतियोगितावच्छेदकगतरूपवृ-
त्तिसामानाधिकरण्यसम्बन्धावच्छिन्नघटभेदनिष्ठावच्छेदकतानिरूपि
तस्वरूपसम्बन्धावच्छिन्नवाच्यत्वत्वानिष्ठावच्छेदकताकनिरूपकता-
काधिकरणतावच्छेदकस्यहेत्वधिकरणेसत्त्वेनाव्याप्त्यापत्तेः । एवञ्च
कालिकेनरूपत्वविशिष्टसाध्यकसद्धेतौ कालिकसम्बन्धावच्छिन्नरूप-
त्वनिष्ठावच्छेदकतानिरूपितविषयित्वसम्बन्धावच्छिन्नरूपत्वनिष्ठाव-
वच्छेदकतानिरूपितनिरूपकतायाः साध्यतावच्छेदकताविशिष्टान्य-
विषयित्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्वेनातादृशतयाऽव्या-
प्तिविरहेण साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छि-
न्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वंनिरूपकतावच्छेदकताया-
न्निरूपकतायाम्वा ननिवेश्यम् तथाच घटवान् महाकालत्वादित्यत्र-
नाव्याप्तिसम्भवः । यत्तु समवायेनवह्नित्वविशिष्टत्वेसति कालिकेन-
वह्नित्वविशिष्टस्य प्रकारितया साध्यतायां समवायेन वह्नित्वविशि-
ष्टविषयकज्ञानत्वे व्यभिचारिणि समवायसम्बन्धावच्छिन्नवह्नित्वनि-
ष्ठावच्छेदकताकनिरूपकत्वमादायातिव्याप्तिवारणायो क्तरूपवृत्ति-
त्वमेवावश्यन्निवेशनीयमेव नतु भेदप्रतियोग्यवच्छेदकतायां विशेष-
णत्वेन प्रागुक्तं साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वानिष्ठाव-
च्छेदकतानिरूपितत्वपीति तन्न उक्तातिव्याप्तिवारणायतादृशरूपाव-
च्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकसंसर्गताकत्वमात्रस्योपा-
देयत्वा न्नचकालिकसम्बन्धावच्छिन्नावच्छेदकताकसमवायसम्ब-
न्धावच्छिन्नावच्छेदकताकनिरूपकतावच्छेदकतायाअपिनोक्तसंसर्ग
ताकत्वसम्भव इति वाच्यं तादृशरूपवृत्तित्वस्यावच्छेदकतायांमेव-
विशेषणत्वात् वृत्तित्वञ्च स्वनिरूपितसंसर्गतावच्छेदकताप्रतियोगि-
कपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति चेन्न साध्यतावच्छेद-
कताविशिष्टान्यावच्छेदकत्वानिरूपितत्वस्य निरूपकत्वविशेषणत्वा-
ननुसन्धानेनैव समवायेनघटत्वविशिष्टसाध्यकमहाकालत्वेऽव्या-
प्त्यभिधानात् तथासति समवायेनवह्नित्वविशिष्टस्य प्रकारित-
या साध्यतायां समवायेनवह्नित्वविशिष्टत्वेसति कालि-
केनवह्नित्वविशिष्टविषयकज्ञानत्वहेतौ साध्याभावप्रतियोगिता-
वच्छेदकावच्छिन्ननिरूपकतात्वस्य कालिकसम्बन्धावच्छिन्न-



समवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकतायामपि-
सत्वेना तिव्याप्तिवारणाय साध्यतावच्छेदकताकसंसर्गताव—
च्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्यवि—
वक्षणीयत्वात् वृत्तित्वञ्च व्यासज्यवृत्त्यवच्छेदकतापक्षे स्व-
निरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदक-
त्वसम्बन्धावच्छिन्नमवच्छेदकत्वानिष्ठ मितरथा स्वावच्छेदकताघ-
टकसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्ब
न्धावच्छिन्न न्निरूपकत्वनिष्ठमेवबोध्यम् । यत्तु समवायेनवह्नित्ववि-
शिष्टसाध्यके तत्तद्वह्न्यनुयोगिकसमवायेन वह्नित्वविशिष्टविषयक-
ज्ञानत्वहेतौ तद्वह्न्यनुयोगिकसमवायेनवह्नित्वविशिष्टनिरूपकत्वमादा-
यातिव्याप्तिवारणाय रूपवृत्तित्वन्निवेशनीयमिति तन्न एतत्कल्पेवि-
शेषरूपेणसंसर्गत्वास्वीकारा दन्यथा वह्नित्वप्रतियोगिकसमवायेन-
वह्नित्वविशिष्टसाध्यकसद्धेतौ प्रतियोगिव्यधिकरणाभावाप्रसिद्धे र-
व्याप्त्यापत्तेः । नचैवं घटान्यत्वविशिष्टवाच्यत्वसाध्यकेप्रागुक्तात-
व्याप्तेः कागतिरितिवाच्यं प्रतियोगिताविशिष्टनिरूपकत्वस्यैवप्रति-
योगितावच्छेदकगतरूपवृत्तित्वम्विहायविवक्षितत्वात् वैशिष्ट्यञ्च
स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्व स्ववृ-
त्तित्वोभयसम्बन्धेन वृत्तित्वञ्च स्वनिरूपितावच्छेदकताविशिष्टान्या-
वच्छेदकत्वानिरूपितत्वोभयसम्बन्धेन वैशिष्ट्यञ्चोभयत्र स्ववृत्ति-
त्वाविकलचतुष्टयसम्बन्धेन तत्रचकालिकेनरूपत्वविशिष्टसाध्यके वि-
षयितयारूपत्वोविशिष्टत्वेसति कालिकेनरूपत्वविशिष्टाभावमादायाव्या-
प्तिवारणाय साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छि-
न्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वम्विवक्षणीयम् । एतेन म-
हाकालान्यत्वविशिष्टघटत्वावच्छिन्ननिरूपकतायां समवायेनवह्नित्व-
विशिष्टस्य विषयितयासाध्यतायांसद्धेतौ तद्वह्न्यनुयोगिकसमवा-
येनवह्नित्वविशिष्टाभावमादायाव्याप्तिवारणाय विवक्षितस्यरूपवृत्ति-
त्वस्यसम्पत्तये स्वनिरूपितसाध्यतावच्छेदकताघटकसम्बन्धाव-
च्छिन्नावच्छेदकतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्य-
नुयोगितावच्छेदकत्वसम्बन्धेनैवतद्वाच्यं निरूपकतावच्छेदकताया-
मेववातद्विशेषणम् । घटकञ्चसाध्यतावच्छेदकताघटकसम्बन्धाव-
च्छिन्नत्वन्नपर्य्याप्तिगर्भमितिनिरस्त मुक्तदोषतादवस्थ्यात् विशेषरूपे-

णसंसर्गत्वानभ्युपगमात् । व्यासज्यवृत्त्यवच्छेदकत्वपक्षे महाकाला·
न्यत्वघटत्वोभयवृत्त्येकावच्छेदकतायाः सम्बन्धद्वयावच्छिन्नतया नि·
रूपकत्वेरूपवृत्तित्वासम्भवाच्च साध्यतानिरूपितावच्छेदकताविशि·
ष्टान्यावच्छेदकत्वानिरूपितत्वस्यैवाविशेषणत्वेच कालिकेनघटत्ववि·
शिष्टसाध्यकमहाकालत्वेऽव्याप्तिर्बोध्या तत्रतादृशप्रतियोगितावच्छे·
दकावच्छिन्ननिरूपकतात्वस्य कालिकसम्बन्धावच्छिन्नमहाकाला·
न्यत्वनिष्ठावच्छेदकतानिरूपितकालिकसम्बन्धावच्छिन्नघटत्वनिष्ठा·
वच्छेदकतानिरूपितनिरूपकत्वेऽपिसत्वेन तादृशानिरूपकताकाधिक·
रणतावच्छेदस्य हेत्वधिकरणेविरहादिति ॥ इदन्तुचिन्तनीयम् महा·
कालान्यत्वविशिष्टघटाभावस्यलक्षणघटकत्वसंपत्यर्थमेत्र प्रतियोगि·
तावच्छेदकावच्छिन्नत्वंप्रतियोगितावच्छेदकताघटकसम्बन्धेनवाच्यं
प्रतियोगितावच्छेदकतायाः पारिभाषिकंसाध्यतावच्छेदकताघटक·
सम्बन्धावच्छिन्नत्वंच निवेशनीयं नचसाध्यतावच्छेदकताघटकस·
म्बन्धावच्छिन्नत्व मपारिभाषिकं निरूपकतावच्छेदकतायामेवनिवे·
शनीयं लाघवादितिवाच्यं फलमुखगौरवस्यादोषत्वात् विशेषरूपे·
णसंसर्गत्वास्वीकारे पारिभाषिकतान्निवेशेप्रयोजनाभावाच्च अतए·
वानुपदमेवाविशिष्टसाध्यकेऽपिकालोघटवान् महाकालत्वादित्यत्रा·
व्याप्तिवारणार्थमेव गुरुभूतस्यप्रतियोगितावच्छेदकाविशिष्टाधिकर·
णत्वस्य प्रतियोगिवैयधिकरण्यघटकतयानिवेशनंवक्ष्यति नचसाध्य·
तावच्छेदकताघटकसम्बन्धेनप्रतियोगितावच्छेदकावच्छिन्नत्वघटित·
कल्पाभिप्रायेणैवाव्याप्त्यनुधावनमितिवाच्यं तथापिप्रतियोगिताव·
च्छेदकताघटकसम्बन्धेनप्रतियोगितावच्छेदकावच्छिन्नत्वविवक्ष·
याऽव्याप्तिवारणसम्भवेप्रयासान्तरस्यसन्दर्भविरोधास्कन्दितत्वापत्ते·
रित्यलम् ॥

विशिष्टनिरूपितसमवायानभ्युपगमादिति, तादृशप्रतियोगिताव·
च्छेदकताघटकतयेत्यादिः तथाचमहाकालान्यत्वविशिष्टपटाद्यभाव·
प्रतियोगितावच्छेदकंयदि सामानाधिकरण्यघटितसामानाधिकरण्य·
सम्बन्धेनमहाकालान्यत्वविशिष्टपटत्वंस्यात् तस्यादेवसमवायः प्रतियो·
गितावच्छेदकताघटकः सचविशिष्टनिरूपितएव विशिष्टस्यप्रतियो·
गितावच्छेदकत्वात् संसर्गताचतस्य विशिष्टनिरूपितसमवायत्वेन
समवायत्वमात्रेणवेत्यन्यदेतत् परन्तु विशिष्टस्यप्रतियोगितावच्छे·



दकत्वमेवनस्वीक्रियते गौरवात् तदनुपस्थितावप्यभावप्रत्य·
याच्च । तथासतिनकेवलस्समवायः प्रतियोगितावच्छेदकताघट·
कः स्वरूपस्यसमवायस्यचतथात्वादित्याशयः । ऋजवस्तु विशिष्ट·
स्यप्रतियोगितावच्छेदकत्वे तन्निरूपितसमवायएवप्रतियोगितावच्छे·
दकताघटकस्संसर्ग स्सचनस्वीक्रियते इतिमहाकालान्यत्वविशिष्ट·
पटत्ववदभावमादायनप्रसिद्धिसम्भवइतिवदन्ति तत्र सिद्धान्तभूतो·
भयाभावघटितकल्पेविशिष्टप्रतियोगिकसमवायाभ्युपगमस्यप्रतियिमा·
नत्वात् तादृशाभावपदेनमहाकालान्यत्वविशिष्टपटत्ववदभावस्यवि·
वक्षितत्व अतइत्यस्यानन्वयापत्तेश्च अनभ्युपगमादित्यस्यैवप्रसिद्धि·
सम्भवे हेतुत्वसम्भवात्पूर्वव्याख्यानेऽनभ्युदगमादित्यन्तस्य स्वरू·
पसमवायाभ्यामेवे त्यत्रहेतुत्वा दतइत्यस्योपसंहारार्थत्वा च्चासंग·
तिरिति ॥ ० ॥

गौरवस्याकिञ्चित्करत्वादिति, नचाविशिष्टसाध्यके प्रतियोगि·
तावच्छेदकावच्छिन्नवैयधिकरण्यप्रवेशे घटवृत्तित्वोपलक्षितसत्ता·
साध्यकसद्धतौ विशिष्टाभावमादायाव्याप्तिदोषइतिवाच्यं पृथिवी·
समवेतत्वासमनियतस्यापीत्याद्यवच्छेदकत्वनिरुक्तिग्रन्थव्याख्याना·
वसरेप्रसंगात्तद्वारणस्यवक्ष्यमाणत्वादिति ॥ ० ॥ ० ॥

संयोगसामान्यस्यचेतीति, नचसत्वाधिकरणनित्यगुणेसंयोग·
स्यवृत्तिनियामकेनसम्बन्धेनसत्वायोगात् कथमतिव्याप्तिरितिवाच्य
मेकार्थसमवायेनतत्रापिसत्वा देकार्थसमवायस्यवृत्तिनियामकतायाः
प्रागेवाङ्गीकृतत्वात् । यत्तु नित्यान्यत्त्वविशिष्टसत्व आदिपदग्राह्येति·
व्याप्तौतात्पर्यात्तत्रकालिकेनसर्वत्रैवहेत्वाधिकरणेसंयोगस्यसत्वादिति
तन्न तथासति ज्ञानसाध्यकेऽपितथातिव्याप्तेस्संभवेन तत्परित्याग·
स्यानौचित्यात् यदिचाव्याप्यवृत्तिसाध्यकेषु संयोगसाध्यकस्यप्रसि·
द्धत्वेन तत्रातिव्याप्तेस्संभविन्या अनुपादानेन्यूनतास्यादितितदुक्त·
रीतिर्विभाव्यते तदैतस्यैवावतरणत्वेनप्रतिपादयितुमुचितत्वादिति ॥

खण्डनादिति, द्वित्वावच्छिन्नप्रतियोगित्वस्यव्यासज्यवृत्तित्वाद्वे
त्यपिद्रष्टव्यम् नचपूर्वंविशिष्टसाध्यकस्थलातिव्याप्तिपरिभवंमनसिनि·
धायविशिष्टसाध्यकस्थलोत्तरमुभयसाध्यकस्थलोत्कीर्तन मिदानी·
न्तद्विपरीतमितिसंदर्भविरोधइतिवाच्यं शिष्यबुद्धिवैशद्यायमतभेदे·
नतथोक्तेरदुष्टत्वादिति यद्वाद्दाचार्येणद्वन्द्वस्थलेऽल्पाचः पूर्वं निपा·

तनियमेनोभयसाध्यकस्थलातिव्याप्तौप्राधान्यसत्वेऽप्युत्तराभिधान-
स्याशक्यत्वादुपेक्षणमित्युक्तम् तत्संदर्भसौष्ठवातिलोभादितिवेदित-
व्यम् तत्रासमासेनसंदर्भशुद्ध्यर्थमुभयसाध्यकस्थलस्यपश्चादुक्तेरेव-
न्याय्यत्वमस्वरसोऽभिमतस्तर्कालङ्कारस्येति ध्येयम् ॥ ० ॥

विशिष्टधर्म्मावच्छिन्नाधेयत्वस्यातिरिक्तित्वेऽति, तथा च वि-
शिष्टसत्वसत्वयोरनतिरिक्तत्वेन गुणनिरूपिताधेयत्वस्य सत्तात्वा-
वच्छेदेनतत्रसत्वेऽपि गुणनिरूपिताधेयत्वस्य विशिष्टसत्तात्वाव-
च्छिन्नाधेयत्वातिरिक्ततया नवच्छेदकविशिष्टसत्तात्त्वावच्छेदेन त-
दभावस्तत्रवर्ततएव तयोरतिक्तत्वे मानञ्च सत्वंगुणवृत्तिनविशिष्ट-
सत्वमितिप्रतीतिरिति प्रतियोगितावच्छेदकीभूतधर्म्मावच्छेदेनस्व-
प्रतियोगित्वसमानाधिकरणाभावाप्रतियोगियत्किञ्चिद्धेत्वधिक-
रणनिरूपितवृत्तित्वाभावकत्वरूपानुपदोक्तप्रतियोगिवैयेधिकरण्यपर्य-
वसितार्थघटितलक्षणेनातिव्याप्तिसंभवो नवाग्रन्थासङ्गतिरित्याश-
यः । नचप्रतियोगितावच्छेदकावच्छेदेनेत्यनुक्तौ सत्तावान् जातेरि-
त्यत्रविशिष्टसत्तात्वावच्छेदेनसत्ताभावप्रतियोगिनिगुणवृत्तित्वाभाव-
सत्वेनतस्यलक्षणघटकत्वाव्याप्तिसम्भवेतत्परित्यागोनोचितइति वा-
च्यम्, स्वप्रतियोगिवृत्तित्वस्यनिरवच्छिन्नविशेषणतयाविवक्षायां-
फलाभावेनव्यापकत्वासंभवात् भेदगर्भव्यापकतायाआदरेऽव्याप्ति-
परिहारायवृत्तिभिन्नत्वस्यैव व्याप्यतयाविवक्षितत्वादिति । केचत्तुवि-
शिष्टधर्म्मावच्छिन्नाधेयत्वस्यातिरिक्तत्वोक्त्या स्वप्रतियोगितावच्छेद-
कावच्छिन्नवृत्तित्वसामान्ये हेत्वधिकरणयत्किंचिद्व्यक्तिनिरूपितत्वा-
भावस्य लक्षणघटकत्वमभिमतमितिवदन्ति, तदसत् जात्यादिसाध्य-
कातिव्याप्तेर्वक्ष्यमाणाया अलग्नकत्वापत्तेः । यत्तु यत्किञ्चिद्धेत्वधि-
करणनिरूपितवृत्तित्वसामान्यं स्वप्रतियोगितावच्छेदकानवच्छिन्न-
मिति तद्यथाश्रुतानुगुणं तत्रसामान्यपदस्य प्रतियोगिनासम्बन्धा-
व्याख्यानेतु रमणीयमेवेति ॥ ० ॥

विशिष्टनिरूपितेति, 'विशिष्टधर्म्मावच्छिन्नेत्यर्थः, गुणेविशिष्ट-
सत्वन्नेतिप्रतीतेः गुणेऽसमवायित्व भ्रमकालोत्पन्नायाः विशिष्टसत्वा-
भावविषयकत्वावश्यकत्वे भ्रमविगमदशायामपि तदभावविषयकत्व-
स्यैवयुक्तत्वा द्विशिष्टसत्वन्नगुणवृत्तीत्यत्रापिहि विशिष्टसत्तात्वावच्छे-
देनगुणानिरूपितवृत्तित्वाभावस्याविषयत्वा द्विशेष्यवृत्तित्वेविशिष्टवृ-



त्तित्वस्य गुणवृत्तित्वेऽसम्भवाद् गुणवृत्तित्वन्नविशिष्टसत्त्वावृत्तीतिप्र-
त्ययविरहा न्नचकपिसंयोगोवृक्षावृत्तिरितिप्रत्ययाविरहेऽपि प्रतियो-
ग्यनवच्छेदकदेशावच्छेदेनयथातदभाव स्तथाप्रकृतेऽप्यस्त्विति-
वाच्यम् विशिष्टसत्तात्वस्यान्यूनानतिप्रसक्ततया सत्तात्ववदवच्छे-
दकत्वेनानवच्छेदकत्वविरहा न्नचविशिष्टसत्वन्नगुणवृत्तीत्यस्यका-
गतिरिति वाच्य मस्वीकारस्यैवगतित्वा न्नअर्थात्यन्ताभावस्यगुण-
वृत्तिनासहाभेदान्वयस्य वा व्युत्पत्तिवैचित्र्येणाङ्गीकारात् प्रत्यक्षादा-
वनियन्त्रितविषयताकेस्वतरामेव सम्भवात् ।

समवायेन कोऽपिनजातिवृत्तिरितिप्रतीत्यनुरोधेनोक्तविषयकत्व-
रीतेरङ्गीकरणीयत्वात् । विशिष्टसत्वंयदिगुणवृत्तिस्याद् गुणवृत्ति-
सत्वभिन्नं स्यादिति सत्वभेदेनगुणवृत्तित्वस्यैवप्रत्युतासिद्धेः
विशिष्टसत्तावान्जातेरित्यत्रातिव्याप्तिरितिभावः विशेष्यवृत्तेर्विशि-
ष्टानुयोगिकाभावमनभ्युपेत्यविशिष्टधर्म्मावच्छिन्नाधेयत्वस्यातिरि-
क्तत्वमभ्युपेत्यचो क्तप्रतीतेर्विशिष्टसतात्वानवच्छिन्नगुणवृत्तित्ववि-
षयकत्वेनोपपत्तिंविधाय विशिष्टस्यानतिरिक्तत्वादितिग्रन्थो यद्ध-
ष्टाचार्येणऋजुमार्गेणव्याख्यात स्तदनेनविशेष्यवृत्तेर्विशिष्टानुयोगि-
काभावानभ्युपगमस्यायुक्तिकस्याङ्गीकारानर्हत्वमालोवाच्य तर्का-
लंकारेणतत्परित्यक्त न्तत्रयुक्त्यनुसरणे विशिष्टधर्म्मावच्छिन्नाधे-
यत्वस्यानतिरिक्ततायामेवपर्यवसानमितिगृहाण ॥ ० ॥

अतिरिक्तत्वोपगमइति, । इदमुपलण मनतिरिक्तत्वेऽपि हेत्वधि-
करणयत्किञ्चिद्व्यक्तिनिष्ठाधिकरणत्वसामान्यउभयाभावविवक्षाया-
न्दोषाभावइति । अथयत्किञ्चिद्धेत्वधिकरणनिरूपितसामान्यइत्येवो-
च्यतामलंवृत्तितात्वनिवेशनेनेतिचेन्न संयोगेनघटसाध्यकसंयोगस-
म्बन्धावच्छिन्नघटाभावत्वहेतुकव्यभिचारिण्यतिव्याप्ते र्घटाभाव-
निरूपितप्रतियोगित्वे घटाभावप्रतियोगितावच्छेदकावच्छिन्नत्व सं-
योगसम्बन्धावच्छिन्नत्वयोस्सत्वा न्नचावच्छिन्नत्वस्याविलक्षणत्वेन
वृत्तितानिष्ठस्यैवप्रवेश्यतयाप्रतियोगित्वेतदभावोक्षतएवेतिवाच्यं प्र-
तियोगित्वाधेयत्वादेः प्रतियोग्याधेयस्वरूपत्वे ऽवच्छेदकरूपत्वेवा-
घटत्वावच्छिन्नप्रतियोगित्वाधेयत्वयोरैक्येना धेयतानिष्ठयोरपितयो-
र्नाभावः प्रतियोगित्वइत्यतिव्याप्ते राधेयतात्वोपादानेचा धेयतात्वा-
वच्छिन्ननिरूप्यतायाएवनिविष्टत्वेन प्रतियोगित्वेतद्विरहान्नातिव्या-

प्तिरिति ॥ ० ॥

ननु वृत्त्यनियामकसम्बन्धेनसाध्यतायांसद्धेतौ हेत्वधिकरणनिरूपितवृत्तित्वसामान्ये साध्याभावप्रतियोगितावच्छेदकावच्छिन्नत्व साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वयोरभावसत्वेनाव्याप्तेरेतत्कल्पेसम्भवितया तदुपेक्षायानिर्बीजत्वापत्ति र्यदिचसम्बन्धित्वन्निवेश्यते तदाप्रतियोगितावच्छेदकावच्छिन्नयत्किञ्चिद्धेत्वधिकरणनिरूपितसम्बन्धित्वसामान्ये साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावस्यैवास्तुलक्षणत्वमिति चेन्न विभिन्नकालीनयोः स्ववृत्तिवाच्यत्वादिनामपिसम्बन्धत्वाभावे तद्घटवान्तत्क्रियात्वादित्यत्रातिव्याप्तेः तेषांतत्सम्बन्धत्वे त्वेतस्यलक्षणान्तरत्वमेवावसेयमिति ॥

नचोभयाभावमुपेक्ष्यविशिष्टाभाववचनमेवोचितमितिवाच्यं व्यधिकरणसम्बन्धेनव्यापकत्वापत्ते रुभयोरेकत्राधेयत्वेविरहेण वैशिष्ट्यासम्भवेन साध्याभावम्यलक्षणाघटकत्वात् वह्नीयसंयोगेनसाध्यतायां प्रतियोगितावच्छेकावच्छिन्नत्व साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वयोरेकत्राधेयत्वेविरहेण वैशिष्ट्याप्रसिद्ध्याभावाप्रसिद्धेरव्याप्तेरिति ॥ ० ॥

अत्रसध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वसामान्ये हेत्वधिकरणयत्किञ्चिद्व्यक्तिनिरूपितत्व यादृशाभावप्रतियोगितावच्छेदकावच्छिन्नत्वोभयाभावस्य यादृशाभावप्रतियोगितावच्छेदकावच्छिन्ननिरूपकत्वसामान्ये हेत्वधिकरणयत्किञ्चिन्निष्ठसम्बन्धितानिरूपितत्व साध्यतावच्छेदकसंम्बन्धावच्छिन्नत्वोभयाभावस्यच लक्षणान्तरत्वं बोध्यम् ॥ ० ॥

एवंहेत्वधिकरणयत्किञ्चिद्व्यक्तिनिरूपितवृतित्वनिरूपितवृत्तितानवच्छेदकत्वं यादृशप्रतियोगितावच्छेकावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयत्वे लक्षणान्तरघटकतयावगन्तव्यमिति॥०॥

नव्यास्तु साध्यतावच्छेदकसम्बन्धेनेत्यादि, अत्रहेत्वधिकरणत्वव्यापकाधिकरणतानिरूपकतावच्छेदकधर्म्मावच्छिन्नप्रतियोगिताभिन्नत्वेन प्रतियोगितानिवेशःपर्यवसितः स्वावच्छेदकधर्म्मावच्छिन्नाधिकरणतावत्त्वसम्बन्धेन हेत्वधिकरणत्वव्यापकप्रतियोगिताभिन्नत्वेनवा संयोगादिसम्बन्धेन रूपादीनां पृथिवीत्वव्यापकत्ववारणायच तादृक्प्रतियोगितानवच्छेदके साध्यतावच्छेदकसम्बधावच्छिन्न-



सम्बन्धितावच्छेदकत्वं विशेषणंवाच्यं यद्यपिहेत्वधिकरणत्वसमानाधिकरणावच्छेदकतानिरूपितवृत्तितात्वावच्छिन्नप्रतियोगिताकाभाववान्नेतिप्रतीतिसिद्धसामान्यभेदवत्त्वस्य यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वे निवेशे नकोऽपिदोष स्तथापिहेत्वधिकरणत्वव्यापकत्वानिवेशापेक्षया नपर्यवसाने लाघवमितिबोध्यम् ॥

नचैवमिति, एवमित्यस्य यथाश्रुतार्थत्यागइत्यर्थः ।

समवायेन घटाद्यभावोऽपिप्रतियोगिव्यधिकरण इति, नचैतल्लक्षणस्याभावाघटिततयेदमसंगत मितिवाच्य मेतस्योदक्षरत्ववारणाय स्वप्रतियोगितावच्छेदकसम्बन्धेन यत्प्रतियोगितावच्छेदकावच्छिन्नाधिकरणंहेत्वधिकरणं तत्प्रतियोगितावच्छेदकसम्बन्धान्य साध्यतावच्छेदकसम्बन्धेन तत्प्रतियोगितावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्ये तात्पर्यस्यवाच्यतया प्रतियोगिव्यधिकरणाभावघटितत्वेनासङ्गत्यभावात् प्रतियोगिवैयधिकरण्यकोटौ प्रतियोगितावच्छेदकत्वेनसाध्यतावच्छेदकस्यानुपादानत्वेन तत्वरूपप्रतियोगिव्यधिकरणाभावत्वस्य पटाद्यभावेसम्भवेन घटाभावोऽपीत्यस्यनासङ्गतिः यत्पदन्तत्पदञ्चाभावपरंबोध्यम् यत्प्रतियोगित्वप्रवेशस्यवैयर्थ्यंतुनाशंकनीयम् यथाश्रुतेऽपियद्धर्म्मावच्छिन्नानाधिकरणं हेत्वधिकरणं तद्भिन्नत्वस्यलक्षणत्वसम्भवे धर्म्मस्याभावप्रतियोगितावच्छेदकत्वेनोपादाने वैयर्थ्यशङ्कायादुर्निवारत्वात् । अनुगमस्त्वभावविशिष्टाभाववदन्यसाध्यतावच्छेदकसम्बन्धधर्म्मावच्छिन्नानिरूपकताकाधिकरणतावद्वृत्तित्वनिवेशेन वैशिष्ट्यञ्च स्वतादात्म्य स्वप्रतियोगितावच्छेदकावच्छिन्नत्व प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन स्वविशिष्टनिरूपकताकाधिकरणतावदन्यहेत्वधिकरणवृत्तित्वोभयसम्बन्धेना भाववत्ताच स्वप्रतियोगितावच्छेदक सम्बन्धावच्छिन्नत्व स्वप्रतियोगितावच्छेदकधर्म्मावच्छिन्नत्वोभयसम्बन्धेन । यद्वासम्बन्धवदन्यसाध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमनुगतम्व्याप्तिः सम्बन्धवत्ताच स्वतादात्म्य स्ववृत्त्यभावीयसाध्यतावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन स्ववृत्तित्वञ्च हेत्वधिकरणवृत्तिभेदप्रतियोगितावच्छेदकतावच्छेदकस्वप्रतियोगितावच्छेदकावच्छिन्ननिरूपकतावच्छेदकत्वसम्बन्धेनेति । केचित्तुसम्पातायातंघटाभावःप्रतियोगिव्य-

धिकरणइतिवदन्ति । अन्येत्वेतल्लक्षणस्यनलक्षणान्तरत्व मपितु प्रति·
योगिव्यधिकरणाभावघटितलक्षणस्यैवतात्पर्य्यार्थत्वमितिसूचयितु म्प्र-
तियोगितावच्छेदकघटत्वावच्छिन्नानधिकरणम्महाकालइतिवक्तव्ये
घटाभावोऽपिप्रतियोगिव्यधिकरणइत्युक्तमितिप्राहुः । परेतुघटत्वाव·
च्छिन्नानधिकरणम्महाकालइत्येवयुक्तःसचपाठःक्वचित्पुस्तकेऽस्त्यपी-
त्याहुः ॥

घटवृत्तित्वविशिष्टद्रव्यत्वेति, घटपदन्तद्धटपर न्तेनविशेषरूपेण
संसर्गत्वाभ्युपगमेऽपिनाव्याप्त्यसम्भवः तद्धटवृत्तित्ववैशिष्ट्यमपि
विशेषरूपेणससंर्गत्वाभ्युपगमएव सार्थकम् ॥ तादात्म्यस्यसंस-
र्गत्वे सम्बन्धित्वप्रवेशेच तद्दाधिवृत्तित्वविशिष्टप्रमेयवान्तद्दाधित्वा-
दित्यत्राव्याप्तिः तद्दाधिवृत्तिताच तादात्म्यसंयोगाद्यन्यतरसम्बन्धा·
वच्छिन्ना साध्यतापि तदन्यतरैरेवबोध्या । इदञ्च तत्सम्बन्धाव·
च्छिन्न वृत्तित्वविशिष्टस्य तेनैवसम्बन्धेनतत्रैवसत्वन्नान्येनतादा-
त्म्यभिन्नेन नान्यत्रच विषयित्वादीनान्तुनसंसर्गत्वमितिमतेन ते·
नमहाकालानुयोगिककालिकादिना विषयित्वादिनाच साध्यानधि·
करणत्वस्य हेत्वधिकरणेप्रसिद्धिमादाय नाव्याप्त्यसम्भवइति ।
वस्तुतोविशेषरूपेणसंसर्गतामनभ्युपेत्य विषयित्वादीनाञ्चासंसर्ग·
तामङ्गीकृत्य पटत्वान्यप्रमेयवान्घटत्वादित्यादावेवाव्याप्तिर्दातुमुचिते·
तिबोध्यम् ॥ ० ॥

यद्यपिस्ववृत्तिवाच्यत्वादीनांसंसर्गत्वे संयोगादिनावह्न्यादिसा·
ध्यकसद्धेतुमात्रेऽभावाप्रसिद्ध्याऽसम्भवएवसम्भवति तथापिसाध्य·
तावच्छदेकत्वोपादानेऽपि स्ववृत्तिवाच्यत्वादिसम्बन्धेनसाध्यकस·
सद्धेतौ दोषस्यदुरुद्धरतया तेषामिदानींसंसर्गत्वानभ्युपगमस्यै·
वयुक्तत्वा दसम्भवम्विहाय धूमवान्वह्नेरित्यादावतिव्याप्तीति,
नचस्ववृत्तिवाच्यत्वादीनांसंसर्गत्वेऽपि तत्सम्बन्धसाध्यकस्थ·
लस्य व्याप्यवृत्तिसाध्यकतया प्रतियोगिवैयधिकरण्यघटितलक्षणा·
लक्ष्यत्वा न्नदोष इतिवाच्यं तथापितेषांसंसर्गत्वमनुपगम्यातिव्या·
प्तिरुक्तेत्युक्तेस्सम्भवादिति ॥

इतितुफलितार्थइति, साध्यताघटकसंसर्गतावच्छेदकतात्वाव·
च्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपविशिष्टावच्छिन्न सामान्ये सं·
सर्गतावच्छेदकभेदमात्रेणैव संसर्गताभेदे साध्यताघटकसंसर्ग·



ताविशिष्टसंसर्गतासामान्येवेतिविवक्षणीय न्तेनपर्वतीयसंयोगेनव·
ह्नेस्साध्यतायां धूमेऽव्यभिचारिणि कालिकसंयोगोभयसम्बन्धेनधू·
मसाध्यकवन्हौचव्याभिचारिणि साध्यतानिरूपितसंसर्गतावच्छेदक·
संयोगत्वावच्छिन्नत्वस्य महानसानुयोगिकसंयोगेकालिकेऽपिचस·
त्वेन वह्न्यभावस्यलक्षणाघटकत्वेननातिव्याप्तिः ॥

प्रथमंसामान्यपदमिति, अत्रसाध्यतावच्छेदकसम्बन्धनिरूपितवृ·
त्तितानवच्छेदकत्वमेवतादृशोभयत्वेविवक्षणीय न्नतुतादृशोभयाभावे
साध्यतावच्छेदकसम्बन्धत्वव्यापकत्व ङ्गौरवादितितुचिन्त्यम् ॥

तथैवाव्याप्तिरतइति, नचसर्वत्रासम्भवसम्भवेऽव्याप्तिदानमनु·
चितमितिवाच्यं विशिष्टधीनियामकस्यैवसंसर्गत्वे संयोगसम·
वायदैशिककालिकदिक्कृताविशिषणतानामेवसंसर्गत्वेन तत्सम्ब·
न्धावच्छिन्नवृत्तिताविशिष्टस्यतेनैवसत्वाभ्युपगमेनच सत्तावृत्तित्व·
विशिष्टप्रमेयत्वसाध्यकसत्तात्वेऽव्याप्त्यभावात् । सत्वानुयोगिकत्व·
स्यसाध्याभावप्रतियोगिकत्वस्यच स्वरूपमात्रएवसत्वेन तन्निष्ठत·
दुभयाभावस्य स्वरूपेविरहात् । केचित्तुवह्निधूमोभयवान्धूमादि
त्यत्राव्याप्तेर्न्नप्रसक्ति रुभयत्वावच्छिन्नप्रतियोगिकत्वस्य सम्बधनिष्ठ·
स्याप्रसिद्धेरितिवदन्ति ।

वह्निधूमोभयसाध्यकसद्धेतावव्याप्त्यभावम्मनसिनिधायाह, स·
द्धेतौनाव्याप्तिरिति–सद्धेतुत्वरूपलक्ष्यतावच्छेदकसामानाधिकरण्ये·
न लक्षणासत्वमत्र नाव्याप्तिपदार्थ स्सद्धेतावित्यस्यानन्वयापत्ते
रपितुलक्षणासत्व न्तत्रसद्धेतावित्यस्यावच्छेदकावच्छेदेनान्वयो
ऽसतिबाधकेऽवच्छेदकावच्छेदेनान्वयस्यैवव्युत्पन्नत्वादित्यसम्भवप·
रतैववोक्तग्रन्थस्येत्यपिकाश्चित् ॥

अभावान्तरेति, तद्धटाभावेत्यर्थः तद्धटप्रतियोगिकत्व तद्घटानु
योगिकत्वयोस्तादात्म्यसम्बन्धेसत्वेन विशिष्टप्रसिद्धेरितिभावः ॥०॥

प्रकृताव्याप्तिवारणासंम्भवः स्यादिति, ॥ नचमहाकालाभावमा·
दायैवाव्याप्तिवारणंसम्भवति महाकालप्रतियोगिकत्व महाकालानु
योगिकत्वोभयोस्तादात्म्येसत्वेन तयोर्वैशिष्टचप्रासिद्धेरितिवाच्यं
कालिक तादात्म्यान्यतरसम्बन्धेनसाध्यतास्थले ऽभावस्यतादृश
स्याप्रासिद्धिरिति ।

सामान्याभावमपहायेति, ननूभयाभावापेक्षयायदिविशिष्टाभा·

वेलाघवंस्या त्स्यादपितस्योपादेयत्व मव्याप्त्याहेयत्वञ्च तदेवनास्ति सामानाधिकरण्यात्मकगुरुसम्बन्धस्यावच्छेदकताघटकत्वा त्प्रतियोगिकत्वस्यावच्छेदकत्वे नाधिकावच्छेदकत्वस्य द्वित्वेविरहाच्चेतिचेन्न अद्रव्येद्वित्वस्यापेक्षबुद्धिविशेषविषयत्वरूपतया तस्यावच्छेदकत्वे वहुष्ववच्छेदकत्वप्रसङ्गेन गौरवा दवच्छेदकत्ववाहुल्ये संसर्गतायाअपिवाहुल्येन सामानाधिकरण्यत्वावच्छिन्नैकगुरुसंसर्गताप्रवेशस्यगौरवसम्पादकत्वादिति ॥

द्वित्वस्यप्रतियोगितावच्छेदकतयाऽप्रवेशेनलाघवमनुसृत्याशङ्कते नचेति, नचाभावलाघवमनुसृत्योक्तमितिवाच्यं सिद्धान्तेव्यापकस्वरूपाभावस्य पूर्वपक्षेव्यापकतारूपाभावस्य प्रतियोगितावच्छेदककोटौ तादृशप्रतियोगिकत्वत्वस्यप्रवेशेनसाम्यादिति ॥

धूमवान्वन्हेरित्यादावतिव्याप्तिरिति,–ननु कालिकसंयोगाभ्यां घटस्य तादात्म्येन च महाकालस्य साध्यतायाम्महाकालत्वे गगनादिप्रतियोगिकेसंयोगे तादात्म्येवा कालिकेनमहाकालवृत्तित्वसत्त्वेनाभावाप्रसिद्ध्याऽव्याप्तिसम्भवेऽति व्याप्त्यभिधानमनुचितमितिचेत्सत्यमतिव्याप्तेष्प्रकारान्तरेणावार्यत्वमालोच्याभिधान मव्याप्तिस्तु साध्यतावच्छेदकसम्बन्धस्य संसर्गतानियामकोयस्संसर्गः तदतिरिक्तसम्बन्धावच्छिन्नत्वस्य साध्यवन्निरूपितत्वोभयाभावस्य वृत्तित्वनिष्ठस्य विवक्षयापिवारयितुं शक्यत इत्येतद्विशेषमालोच्यतदनभिधानमितिनसन्दर्भविरोधः। यद्वातिव्याप्तेस्साध्यतावच्छेदकावच्छिन्नप्रतियोगिक साध्यतावच्छेदकसम्बन्धधर्म्मिकोभयाभावघटितकल्पेऽपि सम्भवोऽव्याप्तेस्तुनत्येतद्विशेषमालोच्यातिव्याप्त्यभिधाने न सन्दर्भविरोध इति।

संसर्गतानियामकइति, ॥ साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धावच्छिन्नप्रमात्वावच्छिन्नकार्यतानिरूपितसाध्यतावच्छेदकसम्बन्धनिष्ठकारणतावच्छेदकइत्यर्थः। यद्वा साध्यतावच्छेदकसम्बन्धनिष्ठसंसर्गताप्रयोजकवृत्तितावच्छेदकइत्यर्थः। सचसमवायस्स्वरूपश्चेतिबोध्यम ॥

ननुपर्वतानुयोगिकस्वरूपाभावस्य स्वरूपेणसाध्यातायां पर्वतत्वे साध्यतावच्छेदकसम्बन्धसामान्यान्तर्गते पर्वतानुयोगिकसम्बन्धत्ववतिस्वरूपेसाध्याभावात्मकत्वेनतत्प्रतियोगितावच्छेदकीभूतधर्म्मावच्छिन्नप्रतियोगितानिरूपकेतदुभयस्यैवसत्वेन साध्याभावस्यलक्षणाघटकतयाऽभावान्तरमादायातिव्याप्तिः एवंप्रतियोगितायाष्प्रतियोगिस्वरूपत्वे संयोगेनवह्निसाध्यके संयोगाभावत्वेव्यभिचारिणि वह्निप्रतियोगिकसम्बन्धत्ववातसंयोगे संयोगाभावनिष्ठानुयोगितानिरूपितत्वस्य सत्वेनाभावान्तरमादायातिव्याप्ति स्नुयोगितायाअनुयोगिस्वरूपत्वे संयोगेनवह्निसाध्यकसंयोगनिरूपिताधेयतात्वेऽपिव्यभिचारिण्यतिव्याप्ति रतआहनिरुक्तप्रतियोगिकसम्बन्धत्वेहेत्वधिकरणयत्किञ्चिद्व्यक्त्यनुयोगिकसम्बन्धत्वोभयेति।



यत्रैकसंयोगव्यक्त्येति, । यत्रोपर्यधोभावेनसंयुक्तौघटपटावुपर्यधोभावविनिमयेनान्योन्यमाधाराधेयभावम्भजेते तत्रोभयत्रैवोभयोर्विशिष्टबुद्धेष्प्रमाणिकतया तस्यैकस्यापिसंयोगस्योभयानुयोगिकत्वमुभयप्रतियोगिकत्वञ्चाङ्गीकरणीयमिति तयोरेकस्यसंयोगेनसाध्यत्वे तदुभयान्यतरत्वेव्यभिचारिण्यतिव्याप्तिरत्रबोध्या न तूपर्यधोभावविरहेणसंयुक्ताङ्गुल्याद्युभयघटकैकसाध्यकतदुभयान्यतरत्वे तादृशसंयोगे प्रतिगित्वानुयोगित्वनिरूपकत्वाविरहा दाधाराधेयभावस्थलएवतत्त्वस्यभट्टाचार्यादिभिष्प्रदर्शितत्वादितिभावः ॥ अत्रयद्यपिसंयोगेनस्वस्यस्वास्मिन्विशिष्टवुद्ध्यनुत्पत्या स्वनिष्ठप्रतियोगित्व स्वनिष्ठानुयोगित्वयोःनिरूप्यनिरूपकभावासंभवात्साध्यतावच्छेदकसंसर्गतावच्छेदकधर्म्मावच्छिन्नसंसर्गताकानुयोगित्वेन यादृशाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकत्वहेत्वधिकरणयत्किञ्चिद्व्यक्तिनिष्ठत्वोभयाभावविवक्षणे संसर्गस्यैक्येऽपि संसर्गतायानिरूपकभेदेनाभिन्नत्वे संसर्गताधर्म्मिकोभयाभावविवक्षणेवानातिव्याप्ति स्तथाप्यतएवेत्यादिग्रन्थासंगते स्साविवक्षानादृता। अतएवा नुपदमेवाधिकरणताधर्म्मिकोभयाभावआशङ्क्यपरित्यक्तः। यदिचसमवायसम्बन्धसाध्यकेवक्ष्यमाणातिव्याप्तिर्यथाश्रुताभिप्रायेण तएवैतदस्वरसादुभयसाध्यकातिव्याप्तिम्वक्ष्यतीतियद्युच्यते तदाविवक्षणीयमेवतदिति॥

तादृशसम्बन्धेनघटादेर्व्याप्यवृत्तितयेति, इदमत्रावधेयम्—यद्यपिनित्यज्ञानानुयोगिकविषयितयाघटादेर्व्याप्यवृत्तित्वमस्ति तथापिविषयितयाघटादेः प्रागुक्तपारिभाषिक व्याप्यवृत्तित्वन्नास्तीतिभवत्येवप्रतियोगिवैयधिकरण्यघटितलक्षणलक्ष्यत्वामिति नचैवमव्याप्तेः कागतिरितिवाच्यं स्वरूपसम्बन्धेनगगनादेर्वृत्तित्वपक्षे घटसाध्य-

कमहाकालत्वेहेतुकाव्याप्तिसमत्वेनेदानीमिष्टत्वात्–वारणीयत्वेतु स्व-
प्रतियोगितावच्छेदकसम्बन्धसामान्ये तादृशोभयाभाववत्वस्य प्रति-
योगितायाः पारिभाषिकसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य च
विवक्षणीयत्वात् । तस्य च प्रतियोगिताविशिष्टप्रतियोगितानवच्छे-
दकसाध्यतावच्छेकावछिन्नसामानाधिकरण्यम्पर्यवसितार्थः वैशि-
ष्ट्यञ्च स्वतादात्म्य स्वावच्छेदकसम्बन्धत्वव्यापकाभावप्रतियोगिता-
निरूपितपरम्परावच्छेदकत्वोभयसम्बन्धेन, तथाच्चपारिभाषिकसा-
ध्यतावच्छेदकसम्बन्धावच्छिन्नत्ववत्समवायादिसम्बन्धावच्छिन्नपट-
त्वावच्छिन्नप्रातियोगितैव प्रतियोगिताविशिष्टाभवतीति काव्याप्ति-
शंकापीति, एवंयथाश्रुतार्थपरित्यागेन साध्यतावच्छेदकावच्छिन्नप्र-
तियोगिकसाध्यतावच्छेदकसम्बन्धसामान्थे तादृशोभयाभाववत्वस्य-
वक्ष्यमाणतया तत्रैतद्दोषस्यापिनसम्भवइति ।

अप्रवेशादिति, ननुप्रतियोगिवैयधिकरण्याघटितलक्षणे साध्य-
तावच्छेदकसम्बन्धावच्छिन्नत्वस्य प्रतियोगिताविशेषणतयोक्तस्थले-
तादृशप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिरितिचेन्न पारिभाषिकस्यतस्यप्र-
वेश्यत्वात्—हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावस्य
साध्यतावच्छेदकसन्बन्धावच्छिन्नप्रातियोगितावच्छेदकत्वीयस्वरूपस-
म्बन्धावच्छिन्नप्रतियोगिताकस्य विवक्षणीयत्वाद्वा, स्ववृत्तिवाच्य
त्वादीनांससंगर्गत्वे तेनसम्बन्धेनसाध्यतायामत्रा व्याप्तिर्दुरुद्धरैवेति
बोध्यम् ॥

प्राचांमतेप्रकारित्वादेरिति, अयमाशयः यस्यचसम्बन्धत्वं तेन
विशिष्टबुद्धिरवश्यंजन्यते सचमत्वार्थीयैरभिलभ्यते–यथावह्निमान्-
पर्वतोरूपवान्घटइत्यादि, नहिवह्निमज्ज्ञान म्वह्निमानभावइत्यादिप्रामा-
णिकानामभिलापइति विषयित्वप्रतियोगित्वादिः संसर्गोऽपिनास्ती-
तिज्ञायते दृश्यतेचवह्निंजानामिवह्निर्नास्तीत्याद्यभिलापः नचतेनतेषां
सम्बन्धत्वसिद्धि द्वितीयाप्रथमयोः सम्बन्धाभिलापकत्वाभावात्
ज्ञानाभावादिप्रत्यक्षादिकञ्च विषयित्वप्रतियोगित्वादिकं प्रकारतयैव
गृह्णातीति ॥

प्राचामित्यस्वरससूचनाय, सचविषयित्वप्रतियोगित्वाद्यनुपस्थि-
ति दशायामपि विषयविशिष्टज्ञान प्रतियोगिविशिष्टाभावादिप्रत्यक्षा-
नुत्पत्तेरानिर्वाहः तेषांसंसर्गत्वेच कार्यकारणभावादिलाघव मन्यथा-



वह्नित्वेतरधर्मानवच्छिन्नप्रकारताकज्ञानत्व मणित्वमात्रावच्छिन्नप्रतियो
गिताकाभावत्वादिना कारणत्व इतरधर्मानवच्छिन्नत्वस्याधिकस्यप्रवे-
शाद्गौरवं दुर्वचत्वंच स्यात् संसर्गत्वेच विलक्षणस्यैवसंसर्गत्वात् , शु-
द्धवह्नित्वविशिष्टस्य तन्निनिरूपितविषयितैव शुद्धमणित्वविशिष्टस्यच
तन्निरूपितानुयोगितातदवच्छिन्नप्रातियोगितैवहि संसर्गः–उक्तञ्चैतत्-
सिद्धान्तलक्षणव्याख्यानेभट्टाचार्येणापीति ॥ ० ।

यद्यपिसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्न-
निरूपितसाध्यवन्निष्ठाधिकरणताभिन्नहेतुमन्निष्ठाधिकरणताकत्वस्य-
मूलोक्तसामानाधिकरण्यान्तार्थतास्वीकारे नकोपिदोष स्तथाप्येतद-
र्थस्य सर्वथामूलाक्षरालभ्यत्वमालोच्य विशेषरूपेणसंसर्गतामभ्युपे-
त्याप्याह अत्रब्रूमः साध्यतावच्छेदकसम्बन्धावच्छिन्नेत्यादि, अत्रसा-
ध्यतावच्छेदकावच्छिन्नत्वं पर्याप्तिघटित म्प्रतियोगितावच्छेदकाव-
च्छिन्नत्वञ्च प्रतियोगितानिरूपितावच्छेदकता विशिष्टावच्छे-
दकतानिरूपितत्वमात्रं-वैशिष्ट्यञ्च, प्रसिद्धचतुष्टयेषुयस्ययस्योपादे-
यत्वंतेनसंबन्धेन एवंचमहानसीयवह्निमान्महानसीयवह्न्यभावत्वा-
दित्यत्र वह्न्यभावमहानसीयाभावौ वह्निमहानसीयाभावश्चादायना-
व्याप्तिः नवामहानसीयवह्न्यभावमादायवह्निमान्धूमादित्यादाव-
व्याप्तिः न च गोत्ववान्कालत्वादित्यत्र सृष्टिकालवृत्तित्वविशिष्टघट-
त्वाद्यभावस्य लक्षणाघटकत्वसंभवोयेनप्रतियोगितावच्छेदकावच्छि-
न्नत्वंपर्याप्तिसहितंनिवेश्यंस्यादितिबोध्यम् । इदमुपलक्षणम् प्रति-
योगितावच्छेदकसम्बन्धेनप्रतियोगिवैयधिकरण्यं प्रतियोगितावच्छे-
दकत्वाभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रप्रतियोगितावच्छे-
दकत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताक इतिविवक्षायामपि
कालोघटवान्महाकालत्वादित्यत्रनाव्याप्तिरिति ।

एवंयादृशप्रतियोगितावच्छेदकावच्छिन्नेत्यादि, अत्रसमवायिन-
स्संयोगेनसाध्यतायांजातिमत्वेव्यभिचारिणि साध्याभावप्रतियोगि
तावच्छेदकावच्छिन्नप्रतियोगिकसमवाये साध्यतावच्छेदकत्व हेत्व-
धिकरणीभूतयत्किञ्चिद्द्रव्यत्त्वनुयोगिकत्वोभयोस्सत्वेनातिव्याप्तिःस्या-
दिति साध्यतावच्छेदकसम्बन्धत्वेतिकथंनोक्तेति । नन्वत्रयथाश्रुतो-
भयाभावनिवेशापेक्षया किंलाघवमस्ति येनतादृशप्रतियोगिताकथं-
नोक्तेत्युक्तमितिचे दत्रब्रूमः यद्यपिप्रकृतसाध्यतावच्छेदकसम्बन्धवृ-

त्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपव्यापकत्वापेक्षया यादृशप्र-
तियोगितावच्छेदकावच्छिन्नप्रतियोगिकसम्बन्धवृत्तिभेदप्रतियोगिता-
वच्छेदकत्वाभावरूपव्यापकत्वे यथाश्रुते गौरवमेव तथापिप्रकृतानु-
मितिविधेयतानिरूपितसंसर्गतावच्छेदकावच्छिन्नवृत्तिभेदप्रतियोगि-
तावच्छेदकतात्वस्य संयोगवृत्तिभेदप्रतियोगितावच्छेदकतात्वापेक्ष-
या गुरुत्वेन द्रव्यानुयोगिकसंयोगेनसाध्यतास्थले द्रव्यानुयोगिक-
संयोगवृत्तिभेदप्रतियोगितावच्छेदकतात्वस्यच संयोगवृत्तिभेदप्रति-
योगितावच्छेदकतात्वापेक्षया गुरुत्वेन तत्तदवच्छिन्नाभावाप्रसिद्ध्या-
ऽव्याप्तेर्वारणाय तादृशप्रतियोगितावच्छेदकंयद्यत्तत्तद्व्यक्तिभेदकूट-
एवयथाश्रुतलक्षणेप्रवेश्यः अत्रचप्रमेयवान् भावत्वादित्यत्र विषयित्वा-
दीनामसंसर्गत्वे प्रमेयाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगि-
कसम्बन्धवृत्तिभेदप्रतियोगितावच्छेदकतात्वस्य सम्बन्धवृत्तिभेदप्र-
तियोगितावच्छेदकतात्वापेक्षयागुरुत्वेन घटाद्यभावप्रतियोगिताव-
च्छेदकावच्छिन्नप्रतियोगिकसम्बन्धवृत्यभावप्रतियोगितावच्छेदकता-
त्वस्यच घटत्वावच्छिन्नप्रतियोगिकसम्बन्धवृत्यभावप्रतियोगिताव-
च्छेदकतात्वापेक्षयागुरुत्वेन तदवच्छिन्नाभावाप्रसिद्ध्या दोषवारणाय
तादृशावच्छेदकभेदकूटः प्रवेश्यः तत्रयथाश्रुतलक्षणे यादृशप्रतियो-
गितावच्छेदकावच्छिन्नप्रतियोगिकत्वभेदस्यप्रविष्टत्वेनगौरवम् एव-
मुभयाभावोयथाश्रुते यादृशाभावप्रतियोगितावच्छेदकावच्छिन्नप्रति-
योगिकत्वावच्छिन्नप्रतियोगिताको ऽत्रसांसर्गिकविषयताविशेषव्य-
क्तित्वावच्छिन्नप्रतियोगिताक इतिस्फुटमेवयथाश्रुतलक्षणेयथाश्रुत-
एवतदंशेगौरवम् घटाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगि-
कत्वघटितोभयत्वस्य घटत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वाप-
क्षयागुरुत्वेन तदवच्छिन्नाभावाप्रसिद्ध्यादोषः स्यादिति तादृशाभा-
वप्रतियोगितावच्छेदकंयत्तदवच्छिन्नप्रतियोगिकत्वंनिवेश्य न्तत्रवह्नेः
साध्यतावच्छेदकतास्थले साध्याभावस्यलक्षणघटकत्वापत्याऽव्याप्तिः
स्या त्प्रतियोगिकत्वस्याविशिष्योपादाने समवायनिष्ठप्रतियोगिक-
त्वमादायवह्निमान्धूमादित्यत्राव्याप्तिस्स्यादिति प्रतियोगितावच्छेदका-
वच्छिन्नप्रतियोगिकंयद्यत्तावदन्यान्यत्वमेवप्रतियोगितयोपादेय न्तत्र-
स्वतरांगौरवम् । एतेनहेत्वाधिकरणभूतयात्किञ्चिद्व्यक्त्यनुयोगिकस-
म्बन्धसामान्ये साध्यतावच्छेदकसम्बन्धत्व यादृशाभावप्रतियोगि-



तावच्छेदकावच्छिन्नप्रतियोगिकसम्बन्धत्वोभयाभाव स्तादृशप्रति-
योगितोपादेयेत्येवकुतोनोक्तमितिकथन्नोक्तमित्याशंकानिरस्ता । एवं-
यथाश्रुतोभयाभावत्वस्यै तादृशोभयाभावत्वापेक्षयागुरुत्वेन व्याप-
कताशरीरे तादृशोभयाभावत्व तदितरोभयानवच्छिन्नत्वप्रवेशेनापि
दीधित्युक्तलक्षणे गौरवम्बोध्यमित्यलम् ॥ ० ॥

प्रवादमनुसृत्याहेति, गगनस्यकालासम्बन्धित्वेतुच्छत्वंस्यात्,
कालसम्बन्धस्यैवसत्वरूपत्वात् एवंशब्दादिकंप्रत्यकारणत्वमपिस्या
त्कालासम्बन्धित्वेतस्यपूर्वकालसम्बन्धघटितत्वा दित्याद्यपियद्यपि-
गगनस्यकालसम्बन्धसाधकमस्ति तथापिप्रामाणिकत्वमेवसत्वं य-
स्यचव्यतिरेकेयस्याभावस्तत्वमेवचकारणत्वमितिपक्षे तस्यासम्भवा
त्प्रवादानुसरणङ्कृतमितिबोध्यम् ॥

धर्मसम्बन्धयोरुपादानमिति, अथधर्मविधयायत्साध्यतावच्छेद-
दकन्धर्मविधयातदवच्छिन्नत्वस्य संसर्गविधयायदवच्छेदकंसंसर्गवि-
धयातदवच्छिन्नत्वस्यचनिवेशनमभिमत न्तत्रसमवायिनस्संयोगेन-
साध्यतायांसद्धेतावव्याप्तिवारण मेकतरनिवेशनापिसम्भवा दपर-
निवेशनम्व्यर्थमिचेन्न, विषायितयाघटसाध्यकतज्ज्ञानत्वहेतुकसद्धेतौ
विषयितयाविषयभावीयप्रातियोगितायां संसर्गविधयायदवच्छेदकंय-
द्विषयित्वंसंसर्गविधयातदवच्छिन्नत्वस्य साध्यतावच्छेदकविषयित्वा-
वच्छिन्नत्वस्यच द्वयोः सत्वेनाव्याप्तेर्धर्मविधयायदवच्छेदकमित्य-
स्यविवक्षणीयत्वात् विषयिणस्तादात्म्येनसाध्यतायां घटज्ञानत्वे वि-
षयिणो विषयित्वसम्बन्धावच्छिन्नप्रतियोगिताकतादृशाभावप्रतियो-
गितायां धर्मविधयासाध्यतावच्छेदकंयद्विषयित्वन्धर्मविधयातदवच्छि-
न्नत्वस्य साध्यतावच्छेदकविषयित्वावच्छिन्नत्वस्यच द्वयोःसत्वेनाव्या-
प्तेर्वारणाय संसर्गविधयायदवच्छेदकमित्यस्यचप्रवेश्यत्वात् एवञ्च
समवायिनस्संयोगेनसाध्यतायांसद्धेतौ संयोगिनः समवायेनाभाव-
मादाव्याप्तिवारणाय धर्मविधयातदवच्छिन्नत्वं संसर्गविधयातदव-
च्छिन्नत्वम्वाप्रवेश्यमित्यत्र विनिगमकाभावेनोभयोरेवप्रवेश्यत्वा द्य-
दिचसंसर्गविधयावच्छिन्नत्वं सम्बन्धानवच्छिन्नावच्छेदकत्वं धर्म-
विधयावच्छेदकत्वं सम्बन्धावच्छिन्नावच्छेदकताकत्वं तथाचलाघव-
मेवविनिगमकं निर्वचनसम्भववैलक्षण्यस्याखण्डस्याप्रामाणिकत्वा
त्तदा तदेकमेवनिवेश्यताम् । वस्तुतस्तु वह्निमान्धूमादित्यत्रमहानसी-

यवह्नयभावं संयोगसमवायोभयसम्बन्धेनवह्नयभावञ्चादायाप्तिवारणाय साध्यतावच्छेदकधर्मातिरिक्तधर्मानवच्छिन्नत्व साध्यातावच्छेदकसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नत्वोभयाभावस्य प्रवेशनयितया तत्रसम्बन्धत्वधर्म्मत्वयोःसार्थक्यस्यातिसुलभत्वमेवेति यदिचमहानसीयवह्नयभावप्रतियोगितावारणाय साध्यतावच्छेदकतादितरोभयानवच्छिन्नत्वमेवप्रतियोगिताविशेषण न्तदापिसमवायिनःसंयोगसमवायोभयसम्बन्धेनसाध्यतायां घटत्वे संयोगिनउभयसम्बन्धेनाभावमादायाव्याप्तिवारणाय धर्म्मविधयावच्छिन्नत्वंप्रवेशनीयमेव एवं समवायिनःसंयोगविशिष्टस्यसंयोगेनसाध्यतायां घटत्वे साध्यस्यसमवायेनाभावमादायाव्याप्तिवारणाय सम्बन्धविधयावच्छिन्नत्वस्याप्यापाततःसार्थक्यंबोध्यमितिध्येयम् ॥ ० ॥

दधित्वविशिष्टप्रमेयवान् स्थूलदधित्वादिति, दधित्वविशिष्टेत्यव्याप्यवृत्तित्वसम्पत्यर्थं साध्यतावच्छेदक तादात्म्येनप्रमेयस्यव्याप्यवृत्तित्वा द्वैशिष्टयञ्च दधित्वाधिकरणेसमवायेनवृत्तित्वरूप मेवञ्चस्थूलपदन्दध्यणुकेव्यभिचारवारणार्थं । घटवृत्तित्वविशिष्टेति सम्पातायातं पूर्वताद्दशद्रव्यत्वसाध्यकस्थललिखनात् अन्यथा विशेषरूपेणसंसर्गत्वमन्तरेण तत्सार्थक्यस्यासम्भवेन तदभ्युपगमे दधित्वविशिष्टप्रमेयवान् स्थूलदधित्वादित्यत्राव्याप्तेरनुत्थानप्रसङ्गात् ।

विभावनीयमिति, भावनावीजन्तु विशेषरूपेणसंसर्गत्वाभ्युपगमेऽपि स्थलविशेषेऽव्याप्तिः साचयद्यत्सम्बन्धेनयद्धर्म्मावच्छिन्नानधिरणमित्यादिलक्षणखण्डनव्याख्यानावसरेऽभिहितैवेति ॥ ० ॥

व्यापकतालक्षणातिव्याप्तिमपिपरिहरति यद्धर्म्मैत्रत्येति, नचसाध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तितावच्छेदकत्वमेवलघुभूतम्विशेषणमस्त्विति वाच्यम् । विशिष्टधर्मावच्छिन्नाधेयत्वस्यानतिरिक्तत्वेगुणानुयोगिकसमवायेनगुणान्यत्वविशिष्टसत्वस्यद्रव्यत्वव्यापकत्वापत्तेरिति ॥

यद्वास्वावच्छेदकताघटकसम्बन्धेनेत्यादि, अथताद्दशप्रतियोगितानिरूपितावच्छेदकतासामान्ये यत्सम्बन्धावच्छिन्नत्व यद्धर्म्मावच्छिन्नत्वोभयाभावइत्येवलाघवाद्विवक्षणीयमितिचे न्मैवं विशिष्टसत्तावान्जातेरित्यत्र विशिष्टसत्तावदभावस्यप्रतियोगिवैयधिकरण्यसम्पत्यर्थं स्वावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्य-



नुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतावदन्य-त्वस्यैव विवक्षणीयतया वह्निमत्पर्वतत्ववदभावस्यलक्षणघटकत्वेन तदीयप्रतियोगितानिरूपितवन्हित्वावच्छिन्नावच्छेदकतायामुभयोःसत्वेनाव्याप्त्यापत्तेः । नचवह्निमत्पर्वतत्ववदभावप्रतियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकत्वाप्रसिद्धिः वह्नित्वपर्वतत्वत्वोभयधर्म्मावच्छिन्ननिरूपकताया उभयत्वानवच्छिन्नाया अलीकत्वादिति वाच्यम् वह्निमत्पर्वतीयवदभावमादायाव्याप्तेः वह्नित्वपर्वतीयत्वोभयधर्म्मावच्छिन्नानिरूपकत्वस्यप्रसिद्धत्वा न्नचप्रतियोगिताधर्म्मिकोभयाभावविवक्षायामपितद्दोषतादवस्थ्यम् वह्नित्वगतैकत्ववृत्त्यवच्छेदकताकताकत्वस्यतत्प्रतियोगितायां सत्त्वादिति वाच्यम् साध्यतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्यैवोभयाभावप्रतियोगित्वेनविवक्षितत्वात् वृत्तित्वञ्च स्वावच्छेदकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वह्निमत्पर्वताभावीयप्रतियोगिताया मुक्तरूपवृत्तित्वस्यसत्वेऽपि तदभावस्यनिरुक्तप्रतियोगिवैयधिकरण्यविरहान्नाव्याप्तिः । अतएवप्रतियोगिवैयधिकरण्यमत्रस्वप्रतियोगिभिन्नत्वमेवलाघवाद्विवक्षणीयमित्यापिनिरस्तम् वह्निमत्पर्वताभावस्य स्वप्रतियोगिभिन्नहेत्वधिकरणकतया तमादायाव्याप्तेः । किञ्च समवायेनद्रव्यत्वसाध्यकगगनत्वहेतौ समवायेनद्रव्यत्ववतस्समनायेनाभावस्यापिलक्षणघटकत्वा त्तत्सम्बन्धावच्छिन्नप्रतियोगित्वस्यतत्सम्बन्धप्रतियोगिन्येवाभ्युपगमपक्षे तत्प्रतियोगिभिन्नत्वस्यगगनेसत्वादव्याप्तेः । अथस्वनिरूपितावच्छेदकतावदन्यत्वमेवप्रतियोगिवैयधिकरण्यघटकम्वाच्यमवच्छेदकतावत्ताच स्वावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरवणतावत्वसम्बन्धेन । यद्वा स्वप्रतियोगितावच्छेदकताविशिष्टानिरूपकताकाधिकरणतावदन्यत्वं विवक्षणीयं वैशिष्ट्यंच स्वावच्छेदकावच्छिन्नत्व स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन एवञ्च वह्निमत्पर्वतीयवदभावस्यलक्षणाघटकत्वेनाव्याप्त्यभावेनावच्छेदकताधर्म्मिकोभयाभावपरित्यागोनोचितः नचोक्तपरम्परायाःसंसर्गत्वाभावेचोक्तनिवेशासम्भवः स्वनिरूपितयात्किञ्चिदवच्छेदकतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतावदन्यत्वं पर्वतीयत्वावच्छिन्नाव-

च्छेदकतामादायहेत्वधिकरणमहानसादावस्त्येवेतिवाच्यम् स्वनिरूपि-
तावच्छेदकतात्वसमानाधिकरणनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदक-
तानिरूपितावच्छेदकतात्वनिष्ठावच्छेदकताकप्रतियोगितानिरूपकप-
र्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतावच्छेदस्यैव-
निवेशनीयत्वात् एवञ्चवह्नित्वगतैकत्वस्यापिताद्दशरूपत्वेन तद्वृत्ति-
निरूपकताकाधिकरणतावत्वसत्वउक्तभेदासत्वा न्नचस्वावच्छेदक-
ताघटकसंबन्धावच्छिन्नत्वप्रवेशादननुगमइतिवाच्य मुक्तपरम्परयाः
संसर्गत्वाभावेतस्यतुल्यत्वात् इतिचेन्मैवं महानसीयवह्निमान्धूमा-
दित्यादौ महानसीयवह्निमदभावप्रतियोगितावच्छेदकनिष्ठां रूपित-
त्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपितवृत्तित्वविशिष्टम-
हानसीयवह्निमदभावप्रतियोगितावच्छेदकताविशिष्टावच्छेदकतात्वा-
वच्छिन्नप्रतियोगितानिरूपितामवच्छेदकता मादायवह्नित्वगतैकत्व
स्यताद्दशावच्छेदकरूपत्ववत्वेन तद्वृत्तिनिरूपकताकाधिकरणत्वस-
त्वेनो क्तभेदस्यहेत्वधिकरणेविरहेणा तिव्याप्तिवारणाय स्वनि-
रूपितावच्छेदकताकत्व समानाधिकरणोभयावृत्तिधर्म्ममात्रावच्छिन्न-
निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्वेन प्रतियोगितायाः
प्रवेशनीयतया प्रतियोगिताधर्म्मिकोभयाभावकल्पे ऽवच्छेदकत्वैका-
धिकरणप्रवेशापेक्षया वच्छेदकताधर्मिकोभयाभावकल्पे प्रतियो-
गिवैयधिकरण्यशरीरउभयावृत्तित्वप्रवेशएवगौरवस्यापत्तेः । यत्तु-
गुरुधर्मस्यप्रतियोगितानवच्छेदकत्वे ताद्दशाधिकरणत्वावच्छिन्नसा-
मान्यभेदस्यनिवेशयितुमशक्यत्वमिति तन्न भवत्कल्पइवात्रापि ताद्द-
शाधिकरणसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभे-
दत्वत्वेना नुयोगितावच्छेदकमनुगमय्य तदवच्छिन्नानुयोगि-
ताकपर्याप्तिप्रतियोगिकूटत्वावच्छिन्ननिवेशे दोषाभावादिति अत्रो-
क्तपरम्परायास्संसर्गत्वमभ्युपेत्य ताद्दशप्रतियोगितावच्छेदकताव-
दन्यत्वादे ष्कुटत्वाद्यघटितत्वेनलघुभूतस्य प्रतियोगिवैयधिकण्य-
घटकताम्मनसिनिधायभट्टाचार्य्येणावच्छेदकताधर्म्मिकउभयाभावआ-
द्दतः वह्निमत्पर्वतीयवदभावमादायव्याप्तेरेव यत्सम्बन्धावच्छिन्ना-
वच्छेदकताकत्वविवक्षापिनिरस्ता उक्ताव्याप्तिवारणाय साध्य-
तावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्य
स्वनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकतावच्छेदक-



तात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्यविवक्षणेऽपि पर्व-
तानुयोगिकसंयोगेनपर्वतीयवद्वह्निमदभावमादायाव्याप्तेर्दुरुद्धरतया
साध्यतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकताकत्वस्यपृथगेवनिवेश-
नीयत्वादिति — ॥ केचित्तुगुरुधर्मस्यप्रतियोगितानवच्छेदक-
त्वे प्रमेयवह्निमान् धूमादित्यादौसंयोगेनप्रमेयवह्निमदभाव-
प्रतियोगितावच्छेदकत्वस्यवह्नावेवकल्पनीयतया प्रमेयवह्नित्वाव-
च्छिन्नसंयोगसम्बन्धावच्छिन्नावच्छेदकत्वाप्रसिध्याऽव्याप्त्यापत्तेः
सिद्धान्तेच विषयितयाप्रमेयवह्निमदभावप्रतियोगितावच्छेदकतायां
तत्प्रसिद्धिरितिवदन्ति–तन्नातिसमञ्जसम् गुरुधर्मसाध्यकव्यभिचा-
रिण्यतिव्याप्तिवारणाय यद्धर्मत्वस्यपारिभाषिकस्यैवविवक्षणीयतया
दोषाभावादिति यद्यप्यत्रोक्तरीत्याप्रतियोगिवैयधिकरण्यस्यपरिष्कार-
उभयावृत्तित्वस्यप्रवेशोऽपि प्रतियोगितावच्छेदकतयो भयत्वस्याप्रवे-
शेन गौरवाभाव स्तथापि यथाश्रुतेवह्निमत्पर्वतीयवदभावमादाया-
व्याप्तिवारणायो भयाभावनिवेशसार्थक्यं तत्रोभयावृत्तित्वप्रवेशे ते-
नोभयाभावनिवेशपक्षस्यागुरुत्वेऽपि पूर्वपक्षवीजस्यलाघवस्याभाव-
श्चेति ॥ वस्तुतस्तु स्वरूपसंयोगसमवायान्यतमसंबन्धेनप्रमेयस्य-
साध्यत्वेवाच्यत्वहेतौ साध्यतावच्छेदकसंबन्धेनप्रमेयवद्भेदस्याप्र-
सिद्धत्वात् प्रमेयवतः संयोगेनसमवायेनवाभावस्यप्रतियोगिताव-
च्छेदकतायां द्रव्यत्वेसत्वेवाकल्पनीयत्वात् स्वरूपेणतदभावस्या-
प्रसिद्धत्वात् प्रमेयवद्घटाद्यभावप्रतियोगितावच्छेदकत्वस्यघटत्वा-
दिष्वेवकल्पनात् प्रमेयावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्ना-
वच्छेदकत्वाप्रसिद्धेः केवलान्वय्यतिरिक्तेपारिभाषिकयद्धर्म्मत्वस्यापि
विरहात् साध्यवन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानिरूपि-
तसाध्यतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकत्वा त्केव-
लान्वयिधर्म्ममात्रस्यचप्रमेयतुल्यत्वाद व्याप्तिस्यादित्युभयाभावनि-
वेशआवश्यकः । अतएवयद्धर्मावच्छिन्नावच्छेदकताकत्वाविशि-
ष्टयत्सम्बन्धावच्छिन्नावच्छेदकताकत्वाभावनिवेशो ऽप्यपास्तः ॥
केचित्तुभेदप्रतियोगितानिष्ठतदुभयस्यैवलाघवेनाभावप्रतियोगित्वेन-
प्रविष्टतया तत्रविशिष्टाभावप्रवेशे प्रमेयसाध्यकेऽव्याप्तिस्स्यादित्याहुः।
ऋजवस्तुयत्सम्बन्धावच्छिन्नयद्धर्म्मावच्छिन्नावच्छेदकत्वाभावनिवे-
शएवतात्पर्यं मन्यथाधूमवान्वह्नेरित्यत्रातिव्याप्ते धूमवदभावप्रति-

योगितायामवच्छेदकतानिरूपितत्वद्वयविरहादितिवदन्ति तदसत्धूमवत्संयोगेनघटवदभावादिप्रतियोगिताया मुभयस्ययथाश्रुतस्यापिसत्वा द्विवक्षितस्यरूपवृत्तित्वद्वयस्य धूमवदभावप्रतियोगितायामपी त्यतिव्याप्तिविरहा दुक्तयुक्त्याप्रमेयसाध्यकाव्याप्तेश्चेतिदिक् । अत्रापिस्वप्रतियोगितावच्छेदकसम्बन्धेनयत्प्रतियोगितावच्छेदकानधिकरणत्वंहेतुमतो यद्धर्म्मावच्छिन्नावच्छेदकताकतत्प्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नावच्छेदकत्वाभावविवक्षाऽपि दधित्वविशिष्टप्रमयादिसाध्यकस्थलाव्याप्त्या पूर्ववदेवनिरस्तावेदितव्या ॥ ० ॥ ० ॥

अन्यथादण्डिमानित्यादाविति, सर्वेषांदण्डानां हेतुमन्निष्ठतत्तद्दण्डावच्छिन्नाभावप्रतियोगितावच्छेदकत्वेन तदभावस्य तत्तद्दण्डानधिके शुद्धदण्डे सत्वायोगा दव्याप्तिप्रसंगेपि तत्ताविशिष्टदण्डावच्छिन्नत्वस्य शुद्धदण्डावच्छिन्नत्वस्यच विलक्षणत्वेन साध्यतावच्छेकशुद्धदण्डावच्छिन्नत्वघटितोभयाभावस्य प्रतियोगित्वसामान्येसत्वेन नाव्याप्तिसम्भव इत्याशयः नचैवंतद्दण्डवतः साध्यतायांव्यभिचारिण्यतिव्याप्तिः प्रतियोगित्वसामान्ये शुद्धदण्डावच्छिन्नत्वघटितोभयाभावसत्वेन परम्परयातदवच्छेदकत्वस्य शुद्धदण्डे सत्वे विशिष्टेपिसत्वादितिवाच्यम् । यादृशधर्म्मावच्छिन्नविधेयकानुमितिः फलं तादृशधर्म्मावच्छेद्यत्वघटिताभावस्यैव व्याप्तिघटकत्वेन तद्दण्डावच्छेद्यत्वघटितोभयाभावस्य प्रतियोगित्वसामान्येविरहा दतिव्याप्त्यभावात् । यद्यप्यवच्छेदकताघटितलक्षणेपि यादृशधर्म्मेऽनवच्छेदकत्वविवक्षायांनदोषः तथापिपर्य्याप्तेरव्याप्यवृत्तितायानिराकृतत्वेन साध्यतावच्छेदकधर्म्मिक व्यापकतावच्छेदकत्वग्रहस्य प्रमात्वासम्भवाद्व्यापकतावच्छेदकतावच्छेदकत्वग्रहस्येदानीमनुमित्यजनकत्वस्याभ्युपगमा दवच्छेदकत्वगर्भनिरुक्तिपरित्यागः । तस्यानुमितिजनकत्वेच यद्रूपावच्छिन्नं यादृशरूपावच्छिन्नमित्यादिविशेषव्याप्तौवक्ष्यति । अवच्छेद्यतागर्भेतु तत्तद्दण्डावच्छिन्नविधेयकानुमितौ तादृशप्रतियोगितात्वव्यापकतद्दण्डावच्छिन्नत्वघटिताभावप्रतियोगितानिरूपितपरम्पराऽवच्छेदकत्वरूपव्यापकतावच्छेदकत्वग्रहस्य भ्रमत्वात् शुद्धदण्डावच्छेद्यत्वघटितोभयाभावस्य प्रतियोगित्वसामान्यनिष्ठस्य प्रतियोगितावच्छेदकत्वरूपव्यापकतावच्छेदकत्वग्रहस्यच प्रमात्वा-



द्दोषइतिध्येयम् ॥

ननुसाध्यतावच्छेदकताघटकसम्बन्धेनप्रतियोगितावच्छेदकवैशिष्ट्योक्तौ तद्व्यक्तित्वविशिष्टप्रमेयत्वप्रतियोगिकस्वरूपेण तादृशप्रमेयत्वविशिष्टसाध्यकतद्दधित्वेऽव्याप्त्यापत्या प्रतियोगितावच्छेदकताघटकसम्बन्धेनैवतद्वाच्यम् तथासति रूपत्वविशिष्टाभावमादायाव्याप्तिवारणाय साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नयद्धर्म्मानिष्ठावच्छेदकताकत्वमेव यद्धर्म्मावच्छिन्नत्वम्विवक्षणीयमिति घटाभावाद्यनुयोगिकस्वरूपेण प्रमेयत्वविशिष्टस्य साध्यतावच्छेदकसम्बन्धेनाभावप्रतियोगितायां प्रमेयत्वावच्छिन्नत्वस्य तादृशस्य न प्रसिद्धिसम्भवः । न च तादृशाभावोगुरुधर्म्मावच्छिन्नाभाव इत्यप्रसिद्ध इति वाच्यम् समवायसम्बन्धेनाभावप्रतियोगिताया म्प्रमेयत्वावच्छिन्न प्रसिद्धिम्बदता गुरुधर्म्मस्यावच्छेदकताभ्युपगमस्येदानींदर्शितत्वा देवञ्च साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितायामेव प्रमेयत्वावच्छिन्नत्वप्रसिद्धिसम्भवे सम्बन्धान्तरावच्छिन्नप्रतियोगिताया न्तत्प्रसिध्यनुधावनम्वृथेत्यपिनिरस्तमित्याशयेनाह प्रमेयत्वावच्छिन्नत्वाप्रसिद्धेरिति । अत्र विषयित्वप्रतियोगित्वादीनांसंसर्गत्वे साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकवैशिष्ट्योक्तौ दोषाभावा द्यद्धर्म्मानिष्ठावच्छेदकतायां सम्बन्धविशेषावच्छिन्नत्वप्रवेशस्यानावश्यकतया साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वेऽपिप्रसिद्धिम्भवत्येवेत्यवधेयम् ।

उभयसाधारणैकेति, ज्ञाननिरूपितत्वाभावानिरूपितत्वाभ्यां वैलक्षण्यनेत्यादिः ॥

प्रकृतसाध्यीयसाध्यतावच्छेदकसम्बन्धसामान्येति; इदमुपलक्षणं साध्यतावच्छेदकसम्बन्धसामान्ये साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्वघटितत्रितयाभावोपि निवेशयितुंयोग्यइति ॥ अत्रविषयित्वादिसम्बन्धेनव्याप्यव्यापकभावस्याभ्युपगमे तेनप्रमेयसाध्यकस्थलस्याव्याप्यवृत्तिसाध्यकस्थलत्वेपिच नप्रमेयवन्नित्यत्वादित्यत्राव्याप्तिसम्भवः प्रमेयत्वावच्छिन्नप्रतियोगिताकविषयितातो घटत्वाद्यवच्छिन्नप्रतियोगिताकविषयित्वस्यवैलक्षण्याद न्यथाघटइतिज्ञानात् प्रमेयइतिज्ञानस्यापिवैलक्षण्यानुपपत्ते रितिप्रमेयत्वावच्छिन्नप्रतियोगिकविषयित्वे घटत्वावच्छिन्नप्रतियोगिकत्वविरहेण

घटाभावस्यलक्षणघटकत्वात् । यत्त्वत्रनित्यज्ञानानुयोगिकप्रमेयघ-
टत्वाच्छिन्नविषयित्वे घटत्वावच्छिन्नप्रतियोगिताकत्वसत्वा न्ना-
तिव्याप्तिवारणम् नचप्रतियोगितावच्छेदकमात्रावच्छिन्नप्रतियोगि-
ताकत्वंविवक्षणीयमितिवाच्यम् केवलघटत्वविशिष्टसाध्यक प्रमेय-
घटज्ञानत्वेसद्धेतौ हेत्वधिकरणानुयोगिकविषयित्वे साध्याभाव-
प्रतियोगितावच्छेदकघटत्वमात्रावच्छिन्नप्रतियोगिताकत्वविरहेण सा-
ध्याभावस्यलक्षणघटकतया व्याप्तेः । नचहेत्वधिकरणानुयोगिकसा-
ध्यतावच्छेदकसम्बन्धस्य साध्यतावच्छेदककेवलघटत्वावच्छिन्न-
प्रतियोगिताकत्वविरहे कथंसद्धेतुत्वं सद्धेतुत्वे कथमव्याप्तिरिति
वाच्यम् विषयित्वरूपसंसर्गप्रतियोगित्वस्यैव विषयतारूपतया प्र-
मेयघटज्ञाने केवलघटत्वविशिष्टस्याविषयत्वे . तज्ज्ञानानुयोगिकवि-
षयित्वस्य केवलघटत्वावच्छिन्नप्रतियोगिताकत्वविरहात् तद्धर्म्मवि-
शिष्टस्य तद्धर्म्मविशिष्टप्रतियोगिकविषयित्वादिसंसर्गानुयोगिन्यपि-
सत्वाभ्युपगमात् तद्धर्म्ममात्रविशिष्टप्रतियोगिकत्वं नहितन्त्रं गौ-
रवा दिति सद्धेतुत्वस्यापिनिर्वाहा दिति भट्टाचार्य्यैरुक्तम् तन्नाति-
युक्तम् तादृशधर्म्मावच्छिन्नप्रतियोगिताकेनैवसंसर्गेण तादृशधर्म्मा-
वच्छिन्नसत्वस्य युक्तत्वात् यदिविशिष्टधर्म्मावच्छिन्नप्रतियोगिकसं-
सर्गंशुद्धधर्मविशिष्टबोधेभासेत भवेदपिसशुद्धस्यसंसर्ग स्तथात्वेत-
द्बोधस्य विशिष्टधर्म्मविशिष्टवैशिष्ट्यावगाहित्वापत्तेः प्रकारतावच्छेद-
कधर्मन्यूनाधिकस्यभासमानसंसर्गप्रतियोगितावच्छेदकत्वे ऽतिप्रस-
ङ्गपाताच्च अत एव यद्रूपविशिष्टेत्युक्तेः फलप्रपञ्चे भट्टाचार्य्येणाविशि-
ष्टसत्तात्वावच्छिन्नप्रतियोगिकसमवायस्य हेतुतावच्छेदकसम्बन्धत्वे
तेनसत्तात्वावच्छिन्नस्यासत्तया यद्रूपविशिष्टपदस्यवैयर्थ्यमाशङ्कि-
तंप्राक् अन्यथाविशिष्टसत्तात्वावच्छिप्रतियोगिकसंसर्गस्य सत्तात्वा-
वच्छिन्नप्रतियोगिकतया तेनसम्बन्धेन सत्तात्वावच्छिन्नस्यापिसत्व-
प्रसङ्ग तद्ग्रन्थासङ्गतेः नचविषयित्वादिष्वेवेदृशनिमइति वाच्यम् ।
नियमभेदकल्पनायामतिगौरवात्—अन्यथाघटत्वावच्छिन्नप्रतियोगि-
ताकाविषयित्व प्रमेयत्वावच्छिन्नप्रतियोगिकविषयित्वयो वैलक्षण्येऽपि
प्रमेयविषयकज्ञाने घटस्यापिसत्वंस्या द्विषयित्वसंसर्गर्गस्थले तद्ध-
र्म्मविशिष्टस्य तदाश्रयप्रतियोगिकसम्बन्धेनसत्वमित्यस्यैव लाघवेना-
भ्युपेयत्वात् । नचप्रमेत्वावच्छिन्नप्रतियोगिकविषयित्वस्य घटत्ववि-



शिष्टसंसर्गत्वे प्रमेयज्ञानानन्तरं घटं जानामीत्यनुव्यवसायापत्तिरि-
तिवाच्यम् तुल्यन्यायेनघटत्वमात्रविशिष्टविषयकज्ञानसाधकानुव्य-
वसायस्य घटंजानामीत्येतद्भिन्नस्याभावा त्तस्य च केवलघटत्वविशि-
ष्टविषयकज्ञान प्रमेयघटत्वविशिष्टविषयकज्ञानयोः शुद्धघटत्वविशिष्ट-
वैशिष्टयावगाहित्वेऽपि प्रमात्व प्रमेयघटज्ञानविलक्षणशुद्धघटज्ञान-
ग्राहकत्वानुपपत्ते स्तस्यचतदभावे ग्राहकान्तराभावेन तज्ज्ञान-
स्यैवालीकत्वापत्ते रितिविशिष्टघटज्ञानेशुद्धघटत्वविशिष्टस्याप्यसत्व-
मभ्युपेयंस्यात्—भवतिचेत्सत्व म्विशेष्यविधयाशुद्धघटत्वविशिष्टस्य
तत्रविषयत्वादेवेतिगृहाणे त्यलमप्रस्तुतजल्पनेन ॥

व्याप्यवृत्तितयेति, । ननु तत्क्षणान्यवृत्तित्वविशिष्टप्रमेयस्य वि-
भुत्वविशिष्टप्रमेयस्यवा नधिकरणदेशस्य प्रसिद्धतया तस्याव्याप्य-
वृत्तित्वेन तत्साधकस्यै तल्लक्षणलक्ष्यतया तत्राव्याप्तिस्सम्भवत्येवेति-
चेन्न तत्सम्बन्धावच्छिन्नवृत्तिताविशिष्टस्य तेनैवसत्व न्नान्येनेतिम-
ते स्वरूपसम्बन्धावच्छिन्नवृत्तित्वस्य साध्यविशेषणत्वे कालिकेन-
साध्यत्वासम्भवा त्कालिकसम्बन्धावच्छिन्नवृत्तित्वस्यतथात्वेच स्व-
रूपेणतदनधिकरणत्वस्य वस्तुमात्रेसत्वेन तादृशानधिकरणस्य का-
लनिष्ठाभावावच्छेदकत्वासम्भवा दन्यथासंयोगेनरूपानधिकरणघटा-
देरपि कालनिष्ठावच्छेदकत्वापत्तेः-कालस्यचकालनिष्ठाभावाधिकर-
णतायामवच्छेदकत्वानभ्युपगमेन तत्क्षणस्यतत्क्षणान्यवृत्तित्वविशि-
ष्टप्रमेयाभावावच्छेदकत्वासम्भवादित्याशयः । यद्वायादृशप्रतियोगि-
तावच्छेदकावच्छिन्नप्रतियोगित्वसामान्ये साध्यतावच्छेदकावच्छिन्न-
त्व साध्यतानिरूपितसंसर्गतावच्छेदकधर्म्मावच्छिन्ननिरूपितत्व हे-
त्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसंसर्गनिरूपितत्वैतत्त्रितया-
भाव स्तादृशप्रतियोगित्वस्य लक्षणघटकत्वमभिमत इति घटत्वा-
वच्छिन्नप्रतियोगित्वस्य प्रमेयत्वाद्यनवच्छिन्नतया घटाभावप्रतियो-
गित्वस्य लक्षणघटकत्वसम्भवइतिभावः ॥

अतएवेतीति, ननुसमवायस्यभिन्नत्वेऽपि कालिकसमवायोभय-
सम्बन्धेनसत्तासाध्यके समवायेनव्यभिचारिणिसत्वेऽतिव्याप्तिः सा-
ध्यतावच्छेकसम्बन्धसामान्यान्तर्गतसमवायउभयाभावविरहा दि-
तिसमवायैक्यमतानुसरणान्निर्बीजमितिचेन्न संसर्गतावच्छेदकमा-
त्रभेदेनसंसर्गताभेदे संसर्गताधर्मिकोभयाभावविवक्षायान्दोषाभा-

वात् । यद्वासाध्यतावच्छेदकसम्बन्धेनसाध्यवदनुयोगिकसाध्यताव-
च्छेदकसम्बन्धसामान्य उभयाभावोविवक्षणीयः-तथाचजन्यानुयो-
गिकसमवाये कालिकेवा गगनादियत्किञ्चिद्व्यक्त्यनुयोगिकत्वघटि-
तोभयाभावसत्वा त्समवायभेदमतेऽतिव्याप्तिरिति—अत्रवह्निधू-
मोभयवान्वह्नेरित्यादावित्यादिग्रन्थस्यो भयसाध्यकाव्याप्तिवारणाय
प्रतियोगितावच्छेदकाश्रयप्रतियोगिकत्वे विवक्षितेऽतिव्याप्तिरित्येत-
त्परतया व्याख्यान न सम्भवतीत्यवगन्तव्य मिति भावः ॥ ० ॥

अथवह्निधूमोभयवान् वह्नेरित्यादावित्यादिग्रन्थेन दीधितिका-
रोक्तदोषस्य कृतोभट्टाचार्येणपरिहार स्संक्षेपादिहप्रदर्श्यते तथाहि
घटद्वयवानितीयंबुद्धि र्द्वित्वेनोपलक्षितवैशिष्ट्यावगाहिनी विशिष्ट-
वैशिष्ट्यावगाहिनीवा नाद्यः, एकघटवत्यपितत्प्रसङ्गात् । नचोपल-
क्षितवैशिष्ट्यावगाहित्वेऽप्यु भयवैशिष्ट्यावगाहित्वमेवेति वाच्यम्,
प्रविरलशाखे एकस्मिन्नपिवृक्षे दूराद्भेदभ्रमे द्वित्वप्रकारेणबुद्धिदर्शना
त्तदभावबुद्ध्यविरोधित्वप्रसङ्गाच्च द्वितीयेऽपि संयोगस्यसंसर्गत्वे
तस्यभिन्नत्वेनोभयप्रतियोगिकत्वासम्भवेन तद्बुद्धेः प्रमात्वानुपप-
त्तिः ।प्रकारतावच्छेदकीभूतधर्म्मावच्छिन्नप्रतियोगिकसंसर्गानुयोगि-
न्येव तेनसम्बन्धेनबुद्धेः प्रमात्वात्, तस्मादुभयत्वावच्छिन्नैकनिरू-
पकतानिरूपित संयोगावच्छिन्नाधारतैव संसर्ग स्तस्यचोभयत्वा-
वच्छिन्नप्रतियोगिकतया प्रमात्वनिर्वाहः । एवञ्चोभयसाध्यकस्थले
तस्यैवसाध्यतावच्छेदकसम्बन्धत्वेन नदोषसम्भवः । वस्तुतस्तु कु-
त्रापिनसंयोगस्यसंसर्गता ऽपितु तदवच्छिन्नाधारत्वाधेयत्वयोरेव,
अन्यथापर्वतोवह्निमानित्यत्रसंयोगः पर्वतेवह्निरित्यत्राधेयत्व म्पर्वते-
वह्निरित्यत्रसंयोगः पर्वतोवह्निमानित्याधारत्व मित्यत्रविनिगमकाभा-
वा दुभयत्रैवसंयोगस्यसंसर्गतायावाच्यतया तद्बुद्ध्योरविशेषप्रस-
ङ्गः । नचैकसंसर्गावगाहित्वेऽपि प्रकारविशेष्यभावभेदाद्भेदइति वा-
च्यम् पर्वतोवह्निमान् वन्हौपर्वतइत्येतयोः पर्वतेवह्निः पर्वतान् वह्नि-
रित्येतयो स्तथाऽप्यविशेषप्रसङ्गात् । नचसंयोगएवाधारता अनु-
योगित्वन्तुतन्नियामकमिति संयोगस्यद्विनिष्ठत्वेऽपिनाधेये, आधार-
त्वप्रसङ्गेनवापर्वतवान् वह्निरित्येतस्यप्रमात्वप्रसङ्गः पर्वते वह्निरित्यत्र-
च स्वनिष्ठसंयोगप्रतियोगित्वंसंसर्गइतिवाच्य माधाराधेयोभयनिष्ठ-
संयोगसमवायातिरिक्ताधेयव्यावृत्तानुयोगित्वस्वीकारे तस्यैवसं-



योगिप्रतियोगिकत्वेन संयोगातिरिक्ताधारत्वरूपसंसर्गत्वोपगमा द-
न्यथाऽधेयएवसंयोगआधारस्यसंसर्गः प्रतियोगित्वंनियामकं वह्नि-
मान् पर्वतइत्यत्रस्वनिष्ठसंयोगानुयोगित्वंसंसर्गइतिवास्वीकरणीयं प्रा-
गुक्तम्वेत्यत्रविनिगमकाभावा दुभयत्रसतः संयोगस्यबुद्धिवैलक्ष-
ण्यायकल्पनीयत्वे नुयोगित्वप्रतियोगित्वयोराधेये ऽनुयोगित्वमाधा-
रे प्रतियोगित्वमाधेयविशेष्यकबुद्धौसंयोगस्संसर्गानुयोगित्वन्नियाम-
क माधारविशेष्यकबुद्धौच स्वनिष्ठसंयोगप्रतियोगित्व मित्येतस्या-
ऽपि विनिगमकाभावेनवक्तुंशक्यत्वाच्च । नचैवं समवायस्यापिसंसर्ग-
त्वानुपपत्तिरितिवाच्य माधारत्वस्यसमवायानतिरेका न्नचघटेरूप-
मित्यस्यरूपवान् घटइत्यतोवैलक्षण्याया धेयत्वरूपातिरिक्तसंसर्ग-
विषयत्वं रूपवान्घटइत्यस्यततोवैलक्षण्यायवा ऽतिरिक्ताधारत्वसं-
सर्गविषयकत्वमित्यत्रविनिगमनाविरह इति वाच्य मुक्तबुद्ध्योर्वैलक्ष-
ण्यायह्यवश्यं विलक्षणसंसर्गविषयकत्वं तत्राधारमात्रनिष्ठआधारवि-
विशेष्यकबुद्धिविषयस्समवायत्वेनपरिभाष्यते नत्वाधेयनिष्ठसतुस-
मवेतत्वत्वेनैवेतिपरिभाषायां कः पर्यनुयोगावसरइत्यलम् ॥ यद्वासंयो-
गस्यभिन्नत्वेनतत्प्रतियोगितायाः प्रत्येकमुभयत्वावच्छिन्नत्वासम्भवे-
ऽपि प्रतियोगिताद्वयत्वावच्छेदेनो भयत्वावच्छिन्नस्यसम्भवा द्य-
त्रानुयोगिन्युभयसंयोगस्तदनुयोगिकएवप्रत्येकेऽपि तादृशप्रतियो-
गिताकत्वाभ्युपगमाच्च नोभयसाध्यकस्थलीयदोषसम्भव इति ॥

सम्बन्धधर्मिकोभयाभावघटितकल्पे लौहित्यस्ययत्रस्वसमवायि-
संयोगेनसाध्यता जपासंयुक्तस्फटिकव्यक्तित्वस्यहेतुता तत्राव्याप्तिः
स्फटिकानुयोगिकसंयोगस्यलौहित्यप्रतियोगिकत्वविरहा त्परम्परास-
म्बन्धस्थलेसम्बन्धघटकस्यविशेषणस्यप्रतियोगित्वा द्विशेष्यस्यचानु-
योगित्वादेव सम्बन्धत्वोपपत्तौ विशिष्टप्रतियोगित्वानुयोगित्वयोर्म्मा-
नाभावात् ॥ साक्षात्परम्परासाधारणप्रतियोगिताकत्वस्यदुर्वचत्वा
दयोगोलकानुयोगिकसंयोगस्यापिधूमीयपरम्परासम्बन्धघटकत्वस-
म्भवेन धूमप्रतियोगिकतया धूमवान्वह्नेरित्यत्रातिव्याप्तिः । नचस-
म्बन्धभेदेनापिभिन्नमेवव्यापकत्वं तत्रपरम्परासम्बन्धस्थले स्वप्रति-
योगिकसमवायवत्प्रतियोगिकत्वमेवनिवेश्यते नतुप्रतियोगिकत्व मिति-
नाव्याप्तिरितिवाच्यं यत्रकालिकघटितसामानाधिकरण्येनघटादेः
साध्यता महाकालवृत्तित्वस्यहेतुत्वं तत्रगगनाभावस्यापिलक्षणघट-

कत्वानुपपत्तिः गगनप्रतियोगिककालिकविशेषणत्वाप्रसिद्ध्या तद्धटप्रतियोगिकत्वाप्रसिद्धेः, नचपरम्पराघटकविशेषणस्य स्वप्रतियोगिकसम्बन्धत्वेनैवोपादेयतया गगनप्रतियोगिकविषयित्वादिप्रसिद्ध्या तद्धटप्रतियोगिकत्वप्रसिद्धे र्नाव्याप्तिरितिवाच्यं स्वसमवायिसमवेतत्वसम्बन्धेनघटसाध्यकघटसंयुक्तजलरूपत्वेव्यभिचारिणि रूपानुयोगिकसमवेतत्वे घटप्रतियोगिकसंयोगात्मकसम्बन्धवज्जलप्रतियोगिकत्वसत्वेनातिव्याप्तेः, एवमेवानुयोगिकत्वस्य परम्परात्मकस्य परम्परासम्बन्धघटकविशेषणनिष्ठाभावप्रतियोगितयाविवक्षणेऽपिदोषउह्यः, संसर्गताऽपिपरम्परासम्बन्धस्थलेऽनेकैवेति संसर्गताधर्मिकोभयाभावविवक्षाऽप्यशक्या नचसंयोगत्वेनसंयोगस्यलौहित्यप्रतियोगिकत्वविरहेऽपि स्वसमवायिसंयोगत्वेन लौहित्यप्रतियोगिकत्वस्वीकारान्नदोषइतिवाच्यं स्वत्वस्यसंसर्गानिविशिष्टतया किञ्चित्समवायिसंयोगात्मकेन साक्षात्सम्बन्धेन लौहित्यबुद्धेः प्रमात्वापत्तेः तत्सम्बन्धस्यपरम्परात्मकत्वेन लौहित्यप्रतियोगिकत्वात् प्रकारप्रतियोगिकविशेष्यानुयोगिकसम्बन्धावगाहिबुद्धेरेवप्रमात्वादित्यवधेयम् । प्रतियोगिताधर्मिकोभयाभावघटितकल्पेतुनदोषः समवायिसंयोगात्मकपरम्परासम्बन्धेन लौहित्याभावस्य समवायिसंयोगात्मकसाक्षात्सम्बन्धेन लौहित्याभावस्यच परस्परं वैलक्षण्योपपत्तये परम्परासम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य परम्पराघटकनिखिलपदार्थैंपर्याप्तिः साक्षात्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकतायाश्च विशेषणमात्रेतद्विशेषणस्यावच्छेदकतावच्छेदकत्वमित्यस्यस्वीकरणीयतया साक्षात्सम्बन्धावच्छिन्नलौहित्याभावप्रतियोगित्वे साध्यतावच्छेदकतापर्याप्त्यधिकरणपरम्परासम्बन्धघटकाशेषपर्याप्तावच्छेदकताकत्वविरहेणोभयाभावस्यविद्यमानतया प्रागुक्तलौहित्यादिसाध्यकस्थलेसद्धेतौनाव्याप्तिः नवापरम्परासम्बन्धसाध्यकेव्यभिचारिण्यतिव्याप्तिः साध्यतावच्छेदकसम्बन्धपर्याप्तावच्छेदकताकनिरूपकताकाधिकरणत्वस्यहेत्वधिकरणेविरहेण परम्परासम्बन्धावच्छिन्नप्रतियोगित्वस्यलक्षणघटकत्वादिति ॥ ० ॥

सम्बन्धित्वस्यावश्यमित्यादि, इदमुपलक्षणम् साध्यवत्संयुक्तत्वस्यव्याप्तित्वे तस्यसाध्यवदनुयोगिकसंयोगप्रतियोगित्वरूपत्वेन संयोगत्वेनतत्प्रवेशा द्गौरवमिति तदपेक्षया साध्यवदनुयोगिकत्वेनप्र-



वेशो लाघवादुचितो विरोधस्यहेत्वाभासताच साक्षादनुमितिविरोधित्वादेव सम्बन्धत्वमपि तदनुयोगिकत्वप्रतियोगिकत्वविशेषएवेत्यपि बोध्यम् ॥

प्रकारताविशेष्यताभिन्नविषयत्वेति,इदञ्चतज्ज्ञानभासमानसम्बन्धलक्षणं तादात्म्येनसम्बन्धत्वसामान्यलक्षणम्वा तत्प्रतियोगिकसम्बन्धत्वञ्चनेद न्तथासतिसंयोगेनद्रव्यत्वप्रकारकज्ञानीयतादृशविषयताश्रयस्य संयोगस्य द्रव्यत्वसम्बन्धत्वापत्तेः, नचप्रमीयत्वम्विषयताविशेषणं प्रमात्वस्यतत्सम्बन्धानुयोगिकविशेष्यकत्वावच्छेद्यतत्प्रकारकत्वरूपत्वेत्र सम्बन्धत्वघटिततया त्माश्रयप्रसंगात् प्रमात्वस्यनिश्चयत्ववदव्याप्यवृत्तिजातिविशेषत्वे तत्सम्बन्धत्वलक्षणत्वमपि तस्यसम्भवत्येन । यद्वातद्व्यक्तिनिरूपिततादृशविषयताविशिष्टविषयत्वम्परम्परायाः संसर्गत्वमंगीकृत्यविवक्षणीयं वैशिष्ट्यञ्च स्वावच्छेदकावच्छिन्नत्वसम्बन्धेनेत्यपिबोध्यम् ।

दीधितौस्वरूपसम्बन्धविशेष इति, अभावस्वरूपसम्बन्धविशेषइत्यर्थः । नचाभावत्वस्यस्वरूपसम्बन्धत्वेऽ ननुगततयाऽनुगतप्रत्ययानुपपत्तिरितिवाच्यं तद्गतधर्मान्तरस्यानुयोगितात्वरूपस्या नुगतस्य स्वीकाराद तिरिक्तानुयोगित्वस्वीकारेऽपि निरूपकभेदेनसम्बन्धान्तरव त्तद्भेदस्यावश्यकतया ऽनुगमकधर्मान्तरस्यस्वीकरणीयत्वादितिभावः ।

दीधितावतिरिक्तएवपदार्थाइति, यथाचविषयत्वादीनामातिरिक्तत्वन्तदालोचनीयंभट्टाचार्यकृतविषयतावादइति ॥ ० ॥ ० ॥

गुरूणामुपदेशेन ग्रन्थार्थानाम्विचारणात् ॥
तर्कसाराभिधग्रन्थे पूर्णः सिद्धान्तसारकः ॥ १ ॥
श्रीधर्मदत्त(१)कृतिनारचितेनयत्ना देतेनमामुदमुपैतुजनोऽपिविद्वान् ।
वालोपकारकृतमेनमवैत्वसूया तीतोमुदम्भजतुचाच्छमयूखचूडः ॥२॥
स्वश्चारिचञ्चलदृगञ्चलचञ्चरीक सञ्चारिचारुचरणाब्जरसञ्चरन्तु ॥
चेतोमधुप्रणयिनःपरिचिन्तनैक लभ्यम्विनिन्दितसुधारसमद्रितुञ्याः ३॥

इति सर्वतन्त्रस्वतन्त्रमिथिलामण्डलमण्डनपण्डितकुलपतिझोपाख्यधर्मदत्त ( वच्चा ) सूरिविरचितसिद्धान्तलक्षणजागदीश्याकोड़पत्रंसमाप्तम् ॥

(१) प्रसिद्धझोपाख्यश्रीवच्चाशर्म्मणा ।